Gopal Mandir Lane
P. O. Chowkhamba, Post Box 8
Varanasi-1 ( India )
1973
Phone : 63145

Second Edition
1973
[redacted]

*Also can be had of*
THE CHOWKHAMBA VIDYABHAWAN
Publishers and Oriental Book-Sellers
Chowk, Post Box 69, Varanasi-1 ( India )
Phone : 63076

श्रीगुरुः शरणम्
श्रीगणेशाय नमः

# कातीयेष्टिदीपकः

सर्वस्फूर्तिविधातारं सर्वविघ्नविनाशनम् ।
सर्वाभीष्टप्रदातारं सद्गुरुं प्रणमाम्यहम् ॥
कर्काचार्योक्तिमाश्रित्य कातीयेष्टिप्रदीपकः ।
क्रियते पर्वतीयेन नित्यानन्देन धीमता ॥

## अथ पौर्णमासप्रयोगो लिख्यते

तत्र तावत् उपवसथे ( यागात्पूर्वदिवसे ) यजमानः प्रक्षालितपाणिपादो गार्हपत्यस्य पश्चादुपविश्य, बद्धशिखो यज्ञोपवीत्याचम्य, यज्ञनारायणं स्मृत्वा, प्राणानायम्य, कुशोपग्रहो देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माऽहं श्रीपरमेश्वरप्रीत्यर्थं दर्शपूर्णमासाभ्यां यक्ष्ये । तत्रादौ श्वः ( अद्य ) पूर्णमासेष्ट्या यक्ष्ये इति सङ्कल्पयेत् । ( दर्शेष्टिपूर्वदिवसे तु दर्शेष्ट्या श्वो यक्ष्ये इत्येव सङ्कल्पः ) ।

ततः आहवनीयान्तरे[1] अध्वर्युणा प्रथमं पञ्च भूसंस्काराः कर्तव्याः । तद्यथा दर्भैः त्र्यं प्राक्संस्थम् उदक्संस्थम् वा त्रिः परिसमुह्य, गोमयेन त्रिरुपलिप्य, स्फ्येन प्रागायता उदक्संस्थाः तिस्रो रेखाः स्रुग्प्रमाणाः कृत्वा, ताभ्यो रेखाभ्यः अनामिकाङ्गुष्ठेन पांसून् यथाक्रममुद्धृत्य अद्भिरभ्युक्षेत् । एवमेव दक्षिणाग्नेः खरे निरूढाः संस्काराः कार्याः ।

१. मेखलापरिवृतमाहवनीय[illegible] ।

ततो गार्हपत्यादाहवनीयस्योद्धरणम्। तत्र 'पौर्णमासेष्ट्यर्थं[1] गार्हपत्यादाहवनीयमुद्धरिष्यामि' इति पूर्वं सङ्कल्प्य गार्हपत्यात्कर्परेण ज्वलन्तमग्निमादाय आहवनीयखरे स्थापयेत्। ततः 'पौर्णमासेष्ट्यर्थं गार्हपत्याद्दक्षिणाग्निमाहरिष्यामि' इति सङ्कल्प्य गार्हपत्यात्कर्परेणाग्निमादाय दक्षिणाग्निखरे स्थापयेत्।

अथाग्न्यन्वाधानम्। तत्र यजमानः षट् समिधो हस्ते गृहीत्वा, स्फ्यं सव्यहस्ते धृत्वा, अग्निमष्टाकपालेन पुरोडाशेन, अग्नीषोमावन्तराऽऽज्येन[2] उपांशु, अग्नीषोमावेकादशकपालेन पुरोडाशेन योऽहं यक्ष्ये इति सङ्कल्प्य; पञ्चदशो वज्रः, व्रीहिभिर्यागः[3] ममाग्रेपक्षः, वपनम्, प्रथमे काले व्रतोपायनम्[4], अन्वाहार्यो दक्षिणा, ये केचन वैकल्पिकपदार्थास्ते ऋत्विक्प्रत्ययेन मयाऽवधारिताः इत्यवधार्य—

---

१. दर्शप्रयोगे दर्शेष्ट्यर्थम् इत्युल्लेखः। एवमुत्तरत्रापि। यद्यपि 'उद्धरेति यजमानो ब्रूयादग्न्याधानप्रभृति' (का० श्रौ० सू० ४।१३।१) इति सूत्रे अग्निहोत्रग्रहणात् पौर्णमासादिषु सम्प्रैषुद्धरणे प्रैषो नास्तीत्यस्य सर्वसंमतत्वात् तदनुसारि उद्धरामि इति प्रतिवचनं नास्त्येव तथापि सर्वकर्मसाधारणस्य स्वमांसो क्रियमाणस्य प्रतिज्ञासङ्कल्पस्य करणे बाधकाभावात् देवयाज्ञिकपद्धत्यनुसारेण उद्धरिष्यामीति सङ्कल्पोल्लेखः। एवमुत्तरत्र आहरिष्यामीति बोध्यम्।

२. दर्शेष्टौ 'विष्णुमन्तराऽऽज्येन' इत्युल्लेखः ऐन्द्राग्नपुरोडाशयाजिनः। सान्नाय्ययाजिनस्तु 'अग्नीषोमावन्तराऽऽज्येन' इत्येव। सान्नाय्ययाजिन उपांशुयागः केषांचिन्नास्त्येव। सान्नाय्ययागस्तु सोमयाजिनो नियतः, अन्यस्य तु ऐच्छिकः। सम्प्रदाये तु असोमयाजिनः सान्नाय्ययागो न दृश्यते। दर्शेष्टौ सान्नाय्ययाजिनो विशेषा उपरिष्टात्प्रदर्शयिष्यन्ते। एवमुत्तरत्र 'अग्नीषोमावेकादशकपालेन पुरोडाशेन' इत्यस्य स्थाने 'इन्द्राग्नी द्वादशकपालेन पुरोडाशेन' इत्युल्लेखो दर्शेष्टौ बोध्यः।

३. व्रीहिभिर्याग इत्युल्लेखः शारदाग्रयणानन्तरम्। वासन्ताग्रयणानन्तरं तु यवैर्याग इत्युल्लेखः।

४. इष्टिदिने एवान्वाधानाद्यनुष्ठाने उत्तमे काले व्रतोपायने 'उत्तमे काले व्रतोपायनम्' इत्येव सङ्कल्पः। एवमन्यत्रापि वैकल्पिकेषु [illegible] तत्तत्प्रसङ्गप्रकारश्च तस्मिंस्तस्मिन् स्थले तत्र तत्रावगन्तव्यः।





ॐ ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम (का० श्रौ० अ० २।१।३) इति मन्त्रेणाहवनीये एकां[1] समिधमादधाति। ततस्तूष्णीं द्वितीयां समिधमादधाति। एवमेव गार्हपत्ये दक्षिणाग्नौ च द्वे द्वे समिधावादधाति। सपत्नीकस्य यजमानस्य मांसमैथुनवर्जनसङ्कल्पः। केवलस्य यजमानस्य शिखावर्जं केशश्मश्रुवपनं नखकर्तनं च। नखकर्तनं पत्न्या अपि। मध्याह्ने पत्नीयजमानौ माषमांसक्षारलवणादि प्रातर्होष्यमाणद्रव्यं च वर्जयित्वा घृतसंयुक्तमल्पमश्नीतः न तृप्तिपर्यन्तम्। अशनानन्तरं यजमानः स्फ्यमादाय गार्हपत्यदक्षिणाग्न्योरन्तरालेन[2] गत्वा आहवनीयस्य पश्चात्समीपे पूर्वाभिमुखस्तिष्ठन् आहवनीयमीक्षमाणः अप उपस्पृश्य—

ॐ अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्-(य० सं० अ० १।५) इति मन्त्रेण व्रतमुपैति। अतः प्रभृति करिष्यमाणकर्माङ्गभूतो यजमानस्य सत्यवदननियमः। रात्रौ तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः[3]। सायाशनेच्छायां सत्यां होमानन्तरमारण्यौषधीनां नीवारप्रभृतीनामन्नं वृक्षफलानि वाऽश्नीयात्। रात्रौ आहवनीयागारे गार्हपत्यागारे वा पत्नीयजमानाभ्यां स्वस्थानापेक्षया अधः आस्तृतभूमौ शयनं

---

१. पूर्वोक्तमन्त्रेणैकां, तूष्णीं द्वितीयां गार्हपत्ये दक्षिणाग्नौ च आहवनीयवदर्थः।

२. 'अन्तरेणाहवनीयं गत्वा' (का० श्रौ० २।१।११) इति सूत्रात्।

३. इष्ट्यर्थं गार्हपत्यादुद्धृते पूर्वाहवनीयाग्नौ अग्निहोत्रहोमः न तु तदर्थं पुनरुद्धरणम्। एवं प्रातरग्निहोत्रहोमार्थमपि नोद्धरणम्। 'प्रतिकर्मोद्धरणमग्रहणे' (का० श्रौ० सू० १।३।२०) इति सूत्रे अग्रहणे इत्युक्त्वा अन्याधेयमुद्धृतस्य समारोपेण तत्कर्मणः पुनरुद्धरणबोधनात्। अतः इष्ट्यर्थमुद्धृते एवाग्निहोत्रहोमः। स्वयमेवेति नियमस्तु "उपवसथे स्वयम्" (का० श्रौ० ४।१५।२४) इति सूत्रात्। अन्यथा तु "स्वयं वा जुहुयात्" इति तत्पूर्वसूत्रेण विकल्पः।

कर्तव्यं, न मध्याह्नादौ। प्रातरपि तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः।

अथवा इष्टिदिने एव प्रातः अन्वाधानादिकं सर्वं कर्तव्यम्[1]। "सद्यो वा प्रातः" (का० श्रौ० २।१।१६) इति सूत्रात्।

ततः उदिते सूर्ये[2] ब्रह्मवरणार्थं ब्रह्मयजमानयोर्द्वे आसने विहारस्योत्तरतो दर्भैरास्तृते स्थापनीये। ब्रह्मोपवेशनार्थमाहवनीयस्य दक्षिणतः दर्भास्तृतमेकमासनम्। ब्रह्मासनतः पश्चिमे यजमानोपवेशनार्थं दर्भास्तृतं द्वितीयमासनम्। तथा अग्नीं प्रणयनायाध्वर्योरुपवेशनार्थं गार्हपत्यस्योत्तरतः एकम्। तदर्थमेव तस्यैव उपवेशनार्थमाहवनीयस्योत्तरतः द्वितीयम्। एवं षडासनानि अवेधविद्धानि वारणादिकाष्ठमयानि कल्पनीयानि।

ततो ब्रह्मवरणम्। विहारस्योत्तरतः उदङ्मुखोपविष्टो यजमानः प्राङ्मुखोपविष्टं ब्रह्माणं साक्षतेन सहिरण्येन दक्षिणहस्तेन ब्रह्मणो दक्षिणं जान्वालभ्य अमुकगोत्रामुकशर्मन् पौर्णमासेष्ट्याऽहं यक्ष्ये[3], तत्र—

"ॐ भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे" (का० श्रौ० २।१।१७) इत्यनेन मन्त्रेण वृणीते।

ततो वृतो ब्रह्मा—

"ॐ अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देवसवितरतन्त्वा वृणते बृहस्पतिं ब्रह्माणं

१. दर्शेष्टौ तु सद्योऽन्वाधानं न, किन्तु पूर्वदिने एव, "पौर्णमासीवदन्यदमायाः" (का० श्रौ० ४।२।४४) इति सूत्रात्।

२. दर्शेष्टिप्रयोगे तु "उदिते सवितरि पौर्णमासस्य तन्त्रं नक्षत्रनिपातादनुदित आमावास्यस्य" इति वचनात् अनुदिते सूर्ये एव अग्निहोत्रानन्तरं ब्रह्मवरणम्। अन्वाधानादिस्तत्र पूर्वदिने एवानुष्ठानात्।

३. दर्शेष्टौ दर्शेष्ट्याऽहं यक्ष्ये इत्युल्लेखः।



तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब् जगत्यै जगत्यनुष्टुभेऽनुष्टुप् प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणाम्" (का० श्रौ० २।१।१८) इति जपेत्।

ततो यजमानः "ॐ वाचस्पते यज्ञं गोपाय"[1] (का० श्रौ० २।१।१९) इत्येवं ब्रह्माणं प्रार्थयेत्। ततो ब्रह्मा 'गोपायामि' इति वदेत्। ततः ब्रह्मा वरणस्थानादुत्थाय आहवनीयात्पूर्वमार्गेण वेदेर्दक्षिणतः स्थापितं ब्रह्मासनमुपगम्य आसनात् पश्चिमोत्तरे प्राङ्मुखः स्थित्वा "ॐ अहं दैविपव्योदनस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः" (का० श्रौ० २।१।२१) इति मन्त्रेण ब्रह्मसदनमीक्षते। ततो ब्रह्मासनादेकं तृणं गृहीत्वा "ॐ निरस्तः पाप्मा सह तेन यं द्विष्मः" (का० श्रौ० २।१।२२) इति मन्त्रेण नैर्ऋत्यां दिशि निरस्य अप उपस्पृश्य "ॐ इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्यै" (का० श्रौ० २।२।१) इति मन्त्रेण ब्रह्मसदने आहवनीयाभिमुखः उपविशेत्।

ततः ब्रह्मासनतः पश्चिमे वेदिं स्पृशन् यजमानः पूर्वकल्पिते स्वासने उपविशेत्।

ततः अध्वर्युः गार्हपत्यस्योत्तरतः पूर्वकल्पिते आसने उपविश्य, वारणकाष्ठनिर्मितं चतुष्कोणं स्फ्यं सव्यहस्ते कृत्वा, दक्षिणहस्तस्थेनोदकेन स्वयं दक्षिणकूर्दकस्तमालिम्प्य, दक्षिणह-

१. उपांशुदेवत्ये [illegible] च वरणाभावेऽपि निर्देशाभावात् 'वाचस्पते' इति [illegible] स्पष्टम्।

२. सौर्यादिविकृतौ अग्निशब्दो न विपरिणमते। वायुना सहैकवाक्येन [illegible]स्याभावात्।

स्येन तं गार्हपत्यस्योत्तरतो निधाय "ॐ भूतस्त्वा भूत करिष्यामि" ( का० श्रौ० २।३।१ ) इति मन्त्रेण चमसमासमेते। ततः "ब्रह्मन्नपः प्रणेष्यामि" ( का० श्रौ० २।३।२ ) इति ब्रह्माणं पृच्छेत्। "यजमान वाचं यच्छ" ( का० श्रौ० २।३।२ ) इति यजमानं च प्रेषयेत्।

ततः ब्रह्मा—ॐ "प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु। सप्तर्षीणाᳪं सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि" ( का० श्रौ० २।२८ ) इत्येतन्मुपांशु पठित्वा, "ॐ प्रणय" इत्युच्चैः अध्वर्योरनुज्ञां दद्यात्, यथाऽध्वर्युः शृणुयात्।

ततोऽध्वर्युः चमसं गृहीत्वा आहवनीयादुत्तरस्यां दिशि संकल्पिते आसने प्राङ्मुख उपविश्य, बहिर्वेदि दर्भेषु प्रणीताचमसं "ॐ कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति" ( य० सं० १।६ ) इति मन्त्रेण स्थापयेत्[2]। तत आहवनीयस्य पुरस्तात्प्रथमम् उदगग्रैः कुशैः स्तरित्वा, ततः दक्षिणतः प्रागग्रैः स्तरित्वा, पश्चादुदगग्रैः स्तरित्वा, उत्तरतः प्रागग्रैः स्तृणुयात्। एवमेव गार्हपत्यस्य परिस्तरणं कृत्वा दक्षिणाग्नेः परिस्तरणं कार्यम्।

ततः गार्हपत्यस्योत्तरतः प्राक्संस्थानि उदगग्राणि पात्राणि[3] द्विशः स्थापयेत्। तद्यथा—शूर्पमग्निहोत्रहवणी

1. न तु उदकम्, पात्रस्यैव तदुपदेशात्। उदकसंस्कारस्य तद्द्वारैव सिद्धेः। तेन विकृतौ उदककार्यापन्नयोर्दधिपयसोर्द्धित्वेऽपि पात्रस्यैकत्वात् न मन्त्रगतस्यासन्दस्य विपरिणामः।

२. प्रणीता आपः सर्वार्था न तु संवपनमात्रार्था इति कर्कभाष्ये ( का० श्रौ० २।३।५ ) स्पष्टम्।

३. "द्विशः पात्राणि सᳬ सादयति" ( २।३।६ ) इति पात्रासादनप्रसङ्गेन द्वन्द्वतावश्यानात् सर्वेषां पात्राणां द्वन्द्वत्वेन स्थापनम्, न तु शूर्पाग्निहोत्रहवण्यादी-



त्येकं द्विकम्। स्फ्यश्च ( ११ पौ०, २० दर्श ) कपालानि चेति द्वितीयम्। शम्या कृष्णाजिनं चेति तृतीयम्। उलूखलं मुसलं चेति चतुर्थम्। दृषदुपला चेति पञ्चमम्।

एवं पञ्च युग्मानि स्थापयित्वा अथवान्यन्यान्यपि द्विशः स्थापयेत्। तद्यथा—पात्री पवित्रच्छेदनानि त्रीणि कुशतरुणानि च, द्वे पवित्रे साग्रे अनन्तर्गर्भे उपवेषश्च ( धृष्टिः ), आज्यस्थाली सोदकमुपमर्जनीपात्रं च, वेदः अन्वाहार्यपात्रं च, वेदितृणम् अभ्रिश्च, योक्त्रं स्रुवश्च, जुहूः उपभृच्च, ध्रुवा सन्नहनाच्छादनानि च, त्रयः परिधयः विधृती च, आज्यं पुरोडाशपात्र्यौ च, होतृषदनं कुशास्तरणं प्रत्नावदानं च, व्रीहियवान्यतररूपम् औषधं प्राशित्रहरणं च, अन्वाहार्यतण्डुलाः अन्तर्धानकटश्च, पूर्णपात्रं कर्मोपयोगार्थं समिद्द्वयं च, इध्माबर्हिषोरुपकल्पनं षडवत्तं चेति। एवं पात्राण्यासाद्य हविःसहितां स्फ्योपहितां प्रागग्राम् पात्रीं गार्हपत्यस्य पश्चाद्भागे स्थापयेत्।

तत "ॐ कर्मणे वां वेषाय वाम्" ( आददे ) ( य० सं० १।६ ) इति मन्त्रेण अध्वर्युः शूर्पमग्निहोत्रहवणीं चाददीत। तत आरभ्य हविष्कृदाह्वानपर्यन्तमध्वर्युः न व्याहरेत्। व्याहरणे वैष्णवमन्त्रं जपेत्। ततः "ॐ प्रत्युष्टᳬ रक्षः प्रत्युष्टा अरातयः" ( य० सं० १।७ ) इति मन्त्रेण शूर्पमग्नि-

त्यैव। पात्रशब्दश्च साधनमात्रार्थको, न तु भाजनवद्विषयः। तेन स्फ्यादीनामपि पात्रत्वमनुपपन्नते। स्नातवन्ति च प्राशित्रलानि स्थापनीयानि। सर्वं चैतत् अस्मिन्नेव सूत्रे कर्कभाष्ये स्पष्टम्।

१. "इध्मं प्रोक्षति त्रिरᳪस्य" इत्युपदिशात् ( २।७।११ ) प्रोक्षणविधानात् अत्रोपकल्पनमभिहितमिध्माबर्हिषोः।

२. सर्वं चाध्याहारः। अस्य संहिताप्रयोगो न भवति, पुनमनुषङ्गस्यापि इति "उत्तराधारमाघारं यजुं पूर्वᳬ समनक्ति" ( का० श्रौ० १।४।२ ) इति सूत्रस्य कर्कभाष्ये स्पष्टम्।

होत्रहवणीं च तापयेत् । ततः प्रणीतास्थोदकोपस्पर्शनम् । ततः "ॐ उर्वन्तरिक्षमन्वेमि" इति मन्त्रेण पात्रीसमीपं गत्वा उपविश्य "ॐ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः"। ( य० मं० १।८ ) "ॐ देवानामसि[1] वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् । अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत्"।(य०मं० १।८–९) "ॐ विष्णुस्त्वा क्रमताम्" ( य० मं० १।९ ) इत्येतान् त्रीन् मन्त्रान् पात्र्याः पूर्वार्धमभिमृश्य जपति । पात्र्याः पश्चात्प्राङ्मुखोपविष्टोऽध्वर्युः "ॐ उरु वाताय" (य० मं० १।९) (भव) इति मन्त्रेण हविरीक्षते । "ॐ अपहतꣳ रक्षः" (य०मं० १।९) इत्यनेनापद्रव्यं निरस्य अपद्रव्याभावे हविरभिमृश्यैव अप उपस्पृश्य "ॐ यच्छन्तां पञ्च" (य० मं० १।९) इति मन्त्रेण हविरालभेत । ( हविर्भेदे भेदेनालम्भः संस्कार्यत्वात् )।

ततः सव्यहस्ते शूर्पं निधाय तस्योपरि अग्निहोत्रहवणीमुत्तानां निधाय प्राङ्मुख आसीनः "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णामि" (य० मं० १।१०) इत्यनेन मन्त्रेण त्रिवारं[2] मुष्टिना

---

1. अत्र निर्येष्टौ पितॄणामसि इत्यूहः । [illegible] देवस्यासि देवयोरसि इत्यूहः । अदितीष्टौ देव्या असि इत्यूहः । [illegible] देवत्वस्य, लिङ्गस्य, पुंस्त्वस्य, वचनस्य त्रित्वस्य च प्रकृतौ [illegible] । [illegible] देवत्वस्य, सौर्यादौ देवतान्त्रित्वस्य, अदितीष्टौ अदितेः पुंस्त्वस्य च [illegible] [illegible] ( का० श्रौ० २ । ३ । १४ ) स्पष्टम् ।

2. निर्वापस्य समाख्यया अध्वर्युकर्तृकत्वात् मुष्टेरध्वर्योरेव [illegible], न तु याजमानः, पदार्थप्राधान्यात् । यजमानपरिमाणं तु "[illegible]" इत्यादौ ग्राह्यम् ।



हविरग्निहोत्रहवण्यां प्रक्षिप्य[1] चतुर्थवारं तूष्णीं प्रक्षिपेत् । ततः चतुर्गृहीतं हविः शूर्पमध्ये दक्षिणपार्श्वे प्रक्षेपणीयम् उदक्संस्थतासम्पत्त्यर्थम् । ततः अग्नीषोमीयपुरोडाशार्थम् "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नीषोमाभ्यां जुष्टं गृह्णामि" ( य० मं० १।१० ) इत्यनेन मन्त्रेण पूर्ववत् त्रिः प्रक्षिप्य, चतुर्थवारं तूष्णीं प्रक्षिप्य, शूर्पमध्ये पूर्वक्षिप्तहविरुत्तरतः प्रक्षिप्य, "ॐ भूताय त्वा नारातये" ( परिशेषयामि )[2] ( य० मं० १।११ ) इति मन्त्रेण पात्र्यां परिशिष्टं हविरभिमृशेत् । ततः "ॐ स्वरभिविख्येषम्" ( य० मं० १।११ ) इति मन्त्रेण प्राचीमीक्षेत । ततः "ॐ दृꣳहन्तां दुर्याः पृथिव्याम्" ( य० मं० १।११ ) इति मन्त्रेण तत उत्थाय "ॐ उर्वन्तरिक्षमन्वेमि" ( य० मं० १।११ ) इति मन्त्रेण गार्हपत्यस्य उत्तरतो गत्वा गार्हपत्यस्य पश्चाच्छूर्पे गृहीतं हविः "ॐ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने[3] हव्यꣳ रक्ष" (य० मं० १।११) इति मन्त्रेण आसादयेत् ।

ततः समप्रमाणौ अनन्तर्गर्भौ अच्छिन्नाग्रौ कुशौ क्षुरिकास्थानीयैः त्रिभिः कुशैः "ॐ पवित्रे स्थो वैष्णव्यौ" ( य० मं० १।१२ ) इति मन्त्रेण[4] छिन्द्यात् । ततः अग्निहोत्रहवण्यां

---

1. "अग्निहोत्रहवण्यां चतुरो मुष्टीन्निर्वपति" इत्यनेन वचनेन निर्वापस्यैव प्राधान्येन विधानात्, मन्त्रस्य तदङ्गत्वात् त्रिरेव मन्त्रप्रयोगः ।

2. 'परिशेषयामि' इत्येव [illegible], न तु '[illegible]' इति कर्कभाष्ये [illegible] । परिशेषणं च हविष एव संस्कारः । [illegible] पुनर्मान्त्रवर्णनम् । [illegible] प्रयोजनम् ।

3. अयं च अग्निशब्दः सन्निधानात् गार्हपत्यविषयो, न प्रकृतदेवतावचनः । तेन सौर्यादिविकृतौ न विपरिणामः ।

4. पवित्रे स्थो वैष्णव्यावित्यत्र द्विवचनान्तो मन्त्रः [illegible] एव. [illegible] प्रधानस्य सत्त्वात् ।

स्वयमेव प्रणीतातः उदकमासिच्य "ॐ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः" (य० मं० १।१२) इति मन्त्रेण ताभ्यां पवित्राभ्यां ता अपः उत्क्षिपेत्, पवित्रे च तत्रैव स्थापयेत्।

ततः सव्यहस्तेऽग्निहोत्रहवणीं निधाय [1]सव्यहस्तस्थाऽग्निहोत्रहवण्यां स्थिता एव अपः दक्षिणहस्तेन "ॐ देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञन्नयताग्रे यज्ञपतिं[2] सुधातुं यज्ञपतिं देवयुवम्। युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये" (य० मं० १।१२–१३) इति मन्त्रेण उदिङ्गयेत् (ऊर्ध्वं चालयेत्)। ततः "ॐ प्रोक्षिता स्थ" (य० मं० १।१३) इति मन्त्रेण[3] प्रणीतास्थजलेनाग्निहोत्रहवणीस्थाः अपः हस्तेन प्रोक्षेत्।

ततः "ॐ ब्रह्मन् हविः प्रोक्षिष्यामि" इति ब्रह्माणं पृच्छेत्। ततो ब्रह्मा "ॐ प्रोक्ष यज्ञं देवता वर्धय त्वम्" इत्यादि वेद्यन्तमुपांशु पठित्वा "ॐ प्रोक्ष" इत्युच्चैः अध्वर्युमभ्यनुजानीयात्। ततोऽध्वर्युः प्रोक्षण्याः सकाशादुदकं सपवित्रहस्तेनादाय "ॐ अग्नये त्वा जुष्टं प्रोक्षामि" (य० मं० १।१३) इति मन्त्रेण शूर्पस्थमाग्नेयं हविः प्रोक्ष्य "ॐ अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि" (य० मं० १।१३) इति मन्त्रेणाग्नीषोमीयं हविः प्रोक्षेत्। ततः विनियोगक्रमेण सर्वाणि पात्राणि[1] प्रतिपात्रं मन्त्रावृत्त्या "ॐ दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि" (य० मं० १।१३) इति मन्त्रेण प्रोक्षेत्। आदौ स्फ्यं प्रोक्ष्य तं सव्यहस्ते कृत्वा कृष्णाजिन–उलूखल–मुसल–शम्या–दृषद्–उपल–पात्री–उपवेष–कपालाष्टक–कपालैकादशकानां प्रोक्षणं कृत्वा आज्यस्थाल्यादीनां यथाऽऽसादितानां प्रोक्षणं कार्यमिति संप्रदायः। आज्यप्रोक्षणं तु स्फ्यं वर्जयित्वा कार्यमिति बोध्यम्। ततः प्रणीताहवनीयान्तराले प्रोक्षणीं निधाय[2] तासु पवित्रे स्थापयेत्।

ततोऽध्वर्युः "ॐ शर्मासि" (य० मं० १।१४) इति मन्त्रेण कृष्णाजिनं[3] हस्तेन गृहीत्वा आसादितपात्रेभ्यः परतो गत्वा "ॐ अवधूतं रक्षोऽवधूता अरातयः" (य० मं० १।१४) इति मन्त्रेण सकृदवधूयोदक्रमुपस्पृश्य गार्हपत्यमुत्तरेण "ॐ अदित्यास्त्वगसि प्रति त्वा ऽदितिर्वेत्तु" (य० मं० १।१४) इति मन्त्रेण प्रत्यग्ग्रीवं कृष्णाजिनमास्तृणीया-

---

१. सतः चारादेव दक्षिणेनोदिङ्गने प्राप्ते सूत्रे दक्षिणग्रहणं सव्ये स्थितानामेव प्रोक्षणीनां दक्षिणेनोदिङ्गनं यथा स्यात् इत्येतदर्थम्। तेन सव्यस्थितानामेव उदिङ्गनं क्रियते इति बोध्यम्।

२. यज्ञपतिशब्दश्च अनेकत्र यजमानके निर्दिश्यते।

३. "प्रोक्षिता स्थेति तासां प्रोक्षणम्" इति सूत्रकारेण स्पष्टमेव प्रोक्षणविधानात्, "इति च" इत्युत्तरसूत्रे तदनुकर्षणाच्च मन्त्रपाठमात्रपक्षस्य सूत्रस्वरसविरुद्धत्वाभावात् प्रोक्षणकर्मत्वे च तासां प्रोक्षणसाधनत्वानुपपत्तेः, प्रणीतानां सर्वार्थत्वात् ताभिरेव अग्निहोत्रहवणीस्थानामपां प्रोक्षणमित्यभिप्रायेण प्रणीतेन प्रोक्षणमभिहितम्।



१. सर्वेषां संस्कार्यत्वेन प्राधान्यात् प्रतिप्रधानं गुणावृत्तिन्यायेन मन्त्रावृत्त्या पात्रप्रोक्षणं सिध्यति। मन्त्रे बहुवचनं तु पूजार्थम् इति भावः। प्रोक्षणमन्त्रे निरूपते देवशब्दस्य स्थाने प्रधानार्थेषु शूर्पादिषु देवशब्दप्रयोगः; अङ्गप्रधानोभयार्थेषु देवपितृशब्दप्रयोगः। यत्तु तत्रापि दैवकर्मार्थमेव तत्र नेह इति विवेकः।

२. प्रोक्षणीशब्दश्च यौगिको न संस्कारनिमित्तः। "आज्यप्रोक्षणीरुपाय" इत्यादौ तेन असंस्कृता एवाप आनीयन्ते।

३. कृष्णस्य मृगस्याजिनमिति षष्ठीतत्पुरुषः। "स कृष्णो भूत्वा चचार तस्य देवा अनुहाय त्वचमेवाच्छायाजह्रुः" इति लिङ्गात्। कृष्णाजिनादानं चावघातार्थम्। अतस्तदभावे तदभावः।

४. कृष्णाजिनास्तरणं च अवघातार्थत्वात् सकृदिति बोध्यम्।

दुपरिलोमम्। वामहस्तेन स्पृष्टे एव कृष्णाजिने दक्षिणेन हस्तेन उलूखलमाहृत्य तदुपरि "ॐ अद्रिरसि वानस्पत्यः प्रति त्वाऽदित्यास्त्वग् वेत्तु" (य० सं० १।१४) इति मन्त्रेण निदध्यात्। ततः शूर्पे पृथक् स्थापितं हविर्द्वयं मिश्रीकृत्य सव्यहस्तस्पृष्टे उलूखले "ॐ अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि" (य० सं० १।१५) इति मन्त्रेण शूर्पेणैव हविरावपेत्। ततः "ॐ बृहद्ग्रावासि वानस्पत्यः" (य० सं० १।१५) इति मन्त्रेण मुसलं हस्तेन गृहीत्वा "ॐ स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व" (य० सं० १।१५) इति मन्त्रेण उलूखले प्रवेश्य स्वयं कण्डने प्रवृत्त एवाध्वर्युः "ॐ हविष्कृदेहि" (य० सं० १।१५) इति मन्त्रेण त्रिः पत्नीमाग्नीध्रं वा हविष्कण्डनार्थम् आह्वयति।

अत्राध्वर्युयजमानयोर्वाग्विसर्गः। अध्वर्यौ हविष्कृदेही-त्येवमाह्वयति सति आग्नीध्रः "ॐ कुक्कुटोऽसि मधुजिह्व

१. उलूखलं पाषाणमयमदृढत्वादृढत्वार्थेन स्तोतुं तत्र अद्रिशब्दः प्रयुज्यते, न तु तस्य अश्ममयत्वम्। तत्त्वे च तस्य वानस्पत्यत्वविरोधात्। "अभिनिहितमेव सव्येन पाणिना भवति अथ दक्षिणेनोलूखलमाहरति" इति तस्य दक्षिणेनैवाहार्य-त्वस्य श्रवणयत्नेऽपेक्षितेति दिक्।

२. तत्रानिमित्तकत्वात् वानस्पत्यपदस्य स्थाने मानुष इति विपरिणामो न युक्तः। तत्रानामुलूखलकार्यपरत्वेऽपि तेषाम् उलूखलवत् कृष्णाजिने निधानाभावात्।

३. अत्र अद्रिशब्दो उपलवाचकः। "दृषो हि तेनाद्रेस्तनूः" इति निर्वचन-यज्ञशब्दलक्षणार्थस्य उपलगतशरीरस्यैव संभवात्। तेन तादृशानावश्यकेऽपि 'अपां तनूरसि' इति विपरिणामः।

४. पितृयज्ञे च 'पितृवीतये' इति विपरिणामः।

५. अत्रापि 'देवेभ्य' इत्यस्य स्थाने 'पितृभ्य' इति पितृयज्ञे विपरिणामः। एकदेवत्ये 'देवायेति', अदितीष्टौ 'देव्यै' इति विपरिणामः।



इयमूर्जमावद त्वया वयं सङ्घातं सङ्घातं जेष्म" (य० सं० १।१६) इति मन्त्रेण शम्यया द्विर्द्विः मन्त्रावृत्त्या समाहत्य उपलां सकृन्मन्त्रेणानेनैव समाहन्यात्।

तदनन्तरं पत्नी आग्नीध्रो वा हविषः कण्डनं कुर्यात्। वितुषीभूतेषु व्रीहिषु स एव "ॐ वर्षवृद्धमसि" (य० सं० १।१६) इति मन्त्रेण हस्तेन शूर्पं गृहीत्वा "ॐ प्रति त्वा वर्षवृद्धं वेत्तु" (य० सं० १।१६) इति मन्त्रेण कण्डितं हविः उलूखले तिर्यक्कृत्य शूर्पे निदध्यात्। ततः "ॐ परापूतᳪं रक्षः परापूता अरातयः" (य० सं० १।१६) इति मन्त्रेण शूर्पेण निष्पूय, तुषान् पृथक्कृत्य, अप उपस्पृश्य, "ॐ वायुर्वो विविनक्तु" (य० सं० १।१६) इति मन्त्रेण कण्डितानकण्डितांश्च तण्डुलान् विविच्य (पृथक्कृत्य), कण्डितान्निधाय, अकण्डितान्पुनरुलूखलमध्ये प्रवेश्य, कण्डनं कृत्वा, पुनर्निष्काम्य, शूर्पं कृत्वा, तुषान्पृथक् कुर्यात्।

ततोऽध्वर्युः सर्वांस्तुषान् "ॐ अपहतᳪं रक्षः" (य० सं० १।१६) इति मन्त्रेण उत्करे निरस्येत्।

१. समाहननं च वचनाद्दृष्टार्थकम्। तेन अन्याहृतेऽपि अन्तर्वा अभ्याहृत्य कुर्यात्। समाहननं च अदृष्टोपकारकः पदार्थः। तेन यावदुक्ते निवर्तते।

२. "स्नानान्तदिवसावहननपिष्टद्रव्येषु तन्त्रक्रिया संभवात्" (का० श्रौ० १।१०।१२) इति सूत्रस्य 'स्नानादिषु लौकिकसिद्धेषु गृहीतेष्वपि पश्चादुक्ता क्रिया पुनर्यथाकथञ्चित् कर्तव्या यथाकथञ्चिदनुक्रियायाः संभवात्' इत्यर्थस्य याज्ञिकैः स्वीकारात् अत्रापि लौकिकसिद्धेष्वीहितेऽपि तन्त्रतया अवघातादिक्रिया विधीयते इति बोध्यम्।

३. अवघातस्य अदृष्टार्थकत्वेऽपि तुषनिरसनस्य तद्दृष्टार्थता न तत्कर्तृकत्वम् किन्तु अध्वर्युकर्तृकत्वमेवोपपद्यते। तुषनिरसनस्य भूतो पूर्वं न विविक्ती-करणापूर्वं निर्देशेऽपि विविक्तीकरणमेव तुषनिरसनपूर्वं प्रतिपत्तव्यम्। अतोऽत्र तुष-निरसनस्यैवमेव सिद्धेः। तदुत्तरं विविक्तीकरणे हि पुनरपि तुषा मिश्रिता एव तिष्ठेयुरिति।

ततः अपः उपस्पृश्य, शूर्पस्थाँस्तण्डुलान् पात्र्यां प्रक्षिप्य, अनामिकाग्रेण तान्स्पृशन् "ॐ देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना" (य० मं० १।१६) इति मन्त्रेणाभिमन्त्रयेत्। ततः त्रिः कण्डनेन सूक्ष्मकणिकाभ्यो हविर्निरूप्य, कण्डनं कृत्वा, निष्काष्य, शूर्पे निष्पूय, कणान्निधाय, एवमेव पुनर्वारद्वयं कुर्यात्। फलीकरणं तूष्णीं वा "ॐ देवेभ्यः शुन्धध्वम्" (का० श्रौ० २।४।२२) इति मन्त्रेण वा कार्यम्। मन्त्रपक्षे प्रतिफलीकरणं मन्त्रावृत्तिः, कणनिधानं च कर्तव्यम्। कणानां "पुरोडाशकपालेन कणान् पास्यति" इत्युत्तरत्र विनियोगस्य वक्ष्यमाणत्वात्।

ततः तण्डुलपेषण—कपालोपधाने सह भवतः। उभयक्रियाकर्तृत्वस्य युगपदेकत्र विरोधात्। अध्वर्युः प्राधान्यात्पेषणं करोति, अग्नीध्र कपालोपधानम्। तत्र सूत्रक्रमेण प्रथमं कपालोपधानमुच्यते। तत्र अग्नौ प्रक्षालितानि कपालानि समादाय गार्हपत्यस्य पश्चादाग्नेयपुरोडाशसम्बन्धीनि अष्टौ कपालानि दक्षिणतः प्रथमं संस्थाप्य, अग्नीषोमीयपुरोडाशसम्बन्धीनि एकादश कपालानि उत्तरतः संस्थाप्य, गार्हपत्यस्य पश्चाद्भागे स्वयमुपविश्याङ्गारापोहनसमर्थम् उपवेषापरनामकं काष्ठं धृष्टिसंज्ञकम् "ॐ धृष्टिरसि" (य० मं० १।१७) इति मन्त्रेणाददीत। अथ "ॐ अपाग्ने अग्निमामादं जहि निष्क्रव्यादꣳ सेध" (य० मं० १।१७) इति मन्त्रेणोपवेषापरनाम्ना धृष्टिसंज्ञकेन काष्ठेन हस्तस्थितेन गार्हपत्यस्याङ्गारान्स्वस्थानादन्यत्र प्रेरयति

उत्क्रमे तु पुनर्निरसनं च प्रतिपत्तिः। अतोऽवधानाभावे तदन्तरः।
अवघातश्च कृष्णाजिनादिनुपन्निष्क्रमोक्तान्तः। तत्र नानाबीजेष्टौ हविरवघातादीनि मन्त्रवन्ति भेदेन। मन्त्रस्य हविःसंस्कारत्वात्। शेषं तन्त्रेण।

१. नानाबीजेष्टौ प्रतिपात्रं मन्त्रेणाभिमन्त्रणम्।



स्वस्थानमध्ये एव, येनाङ्गारस्थाने अतिनम्रभूमौ कपालान्युपधीयेरन्। ततः "ॐ आ देवयजं वह" (य० मं० १।१७) इति मन्त्रेणोपवेषेणैव प्राक्प्रेरिताङ्गारमध्यादेकमङ्गारं गार्हपत्यस्य पश्चाद्भागे दक्षिणे आग्नेयपुरोडाशार्थं कल्पितस्य स्थानस्य मध्ये स्थापयेत्[1]।

ततः "ॐ ध्रुवमसि पृथिवीं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय" (य० मं० १।१७) इति मन्त्रेण मध्ये स्थापितस्याङ्गारस्योपरि उत्तानं मध्यमं कपालमुपदध्यात्[2]। ततः वामहस्तस्याङ्गुल्या स्पृष्टे एव मध्यमकपाले एकमङ्गारम् "ॐ अग्ने ब्रह्म गृभ्णीष्व" (य० मं० १।१८) इति मन्त्रेण निदध्यात्[3]। ततः मध्यमकपालस्य पश्चाद्भागे "ॐ वरुणमस्यन्तरिक्षं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधा[illegible] व्यस्य वधाय" (य० मं० १।१८) इति मन्त्रे[illegible]यं कपालमुपधाय वामहस्ताङ्गुल्या स्पृष्टे एव तस्मिन् "ॐ अग्ने

१. अङ्गारापोहनं च देवयजनार्थम्। सिद्धे हि देवयजने कपालोपधानस्य योग्यत्वात्। एवं च बर्हिषो धारणावर्जने च देवयजनकृते [illegible] अङ्गारापोहनम्। अङ्गारोऽन्वेवाधिश्रयणस्य तयोर्व्यवहितत्वात्।

२. "तं मध्यमेन कपालेनोपदधाति" इति वचनात् मध्यमकपालस्याधस्तादेव अङ्गारो न कपालमात्रस्येति बोध्यम्।

३. "अभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति" इति श्रुतेः।

४. कपालोपरि अङ्गारनिधानं च कपालसंस्कारार्थम्। तेन प्रतिकपालमावर्तते। कपालेऽङ्गारनिधानस्यात्र पुरोडाशश्रपणार्थत्वे [illegible] अन्तरे सात्त्वो [illegible] प्राकारे कुसुमानि [illegible] संस्कारार्थम्। यथा गवां ग्रामनेन संस्कृतं गृहं दैवोपयोगयोग्यं भवति, यथा वा पुष्पवासनेन संस्कृतः प्रावारो धारणोपयोगी भवति तथा अङ्गारनिधानेन संस्कृतं कपालं पुरोडाशश्रपणोपयोगि भवति। अतः प्रत्येकमावर्तनेन संस्कारोऽस्तीति तदनुरोधेन अङ्गारनिधानावृत्तिर्युक्तेति भावः।

ब्रह्मेति" मन्त्रेणाङ्गारं निधाय, मध्यमकपालस्य पुरस्ताद्भागे "ॐ धर्त्रमसि दिवं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय" ( य० सं० १।१८ ) इति मन्त्रेण तृतीयकपालमुपधाय, पूर्ववत् तस्मिन्नङ्गारं निधाय, मध्यमकपालस्य दक्षिणतः "ॐ विश्वाभ्यस्त्वाशाभ्य उपदधामि" ( य० सं० १।१८ ) इति मन्त्रेण चतुर्थकपालमुपधाय, पूर्ववत् तस्मिन्नङ्गारं निधाय, दक्षिणत उपहितस्य चतुर्थकपालस्य पूर्वतः "ॐ चित स्थोर्ध्वचितः" ( य० सं० १।१८ ) इति मन्त्रेण पञ्चमं कपालमुपधाय, पूर्ववत्तस्मिन्नङ्गारं निधाय, दक्षिणतो नि[illegible] कपालस्य पश्चाद्भागे "ॐ चित स्थेति" मन्त्रेण षष्ठं कपालमुपधाय, पूर्ववत्तस्मिन्नङ्गारं निधाय, मध्यमकपालस्य पश्चिमतः स्थापितस्य द्वितीयकपालस्य उत्तरतः "ॐ चित स्थेति" मन्त्रेण सप्तमकपालमुपधाय, पूर्ववत्तस्मिन्नङ्गारं निधाय, सप्तमकपालस्य पूर्वतः "ॐ चित स्थेति" मन्त्रेण अष्टमं कपालमुपधाय, पूर्ववत्तस्मिन्नङ्गारं निदध्यात्।

पञ्चमादीनामष्टमान्तानां कपालानां पूर्वादिक्रमेण उपधानं प्रादक्षिण्यानुरोधेन बोध्यम्।

अग्नीषोमीयपुरो[illegible] एकादशकपालानामुपधानक्रमस्त्वेवम्। आग्नेयपुरोडाशार्थमुपहितकपालानां दक्षिणतः मध्ये प्रथमं मध्यमं, तस्य पश्चाद्भागे द्वितीयं, तस्य पूर्वतः तृतीयं, मध्यमस्य दक्षिणतः चतुर्थं, चतुर्थस्य पूर्वतः एकस्य कपालस्यान्तरालं परिशिष्य पञ्चमं, चतुर्थपञ्चमयोरन्तराले षष्ठं, चतुर्थस्य पश्चिमतः अ...व्यवधानेन सप्तमं, तदव्यवधानेन तत्पश्चिमतः अष्टमं, नवैतामुत्तरतः नवमदशमैकादशानि प्राक्संस्थानि।

१. दर्शे द्वादशकपालानामुपधानमपि एवमेव। तत्र सर्वेषामुत्तरतः नवमदशमैकादशद्वादशानि प्राक्संस्थानि उपधेयानि।



ततः "ॐ भृगूणामङ्गिरसां तपसा तप्यध्वम्" ( य० सं० १।१८ ) इत्यनेन मन्त्रेण ज्वलद्भिरङ्गारैः सर्वाणि कपालानि आच्छादयेत्।

ततः अग्नीदेव प्राणीतीः उपसर्जनीः ( पिष्टसंयवनार्था अपः ) गार्हपत्येऽधिश्रयेत्।

आग्नीध्रे कपालानि उपदधाने एव अध्वर्युः पेषणार्थम् "ॐ शर्मासि" ( य० सं० १।१९ ) इति मन्त्रेण कृष्णाजिनमादाय "ॐ अवधूतं रक्षोऽवधूता अरातयः" ( य० सं० १।१९ ) इति मन्त्रेण कृष्णाजिनमवधूय, अप उपस्पृश्य, कृष्णाजिनम् "ॐ अदित्यास्त्वगसि प्रति त्वाऽदितिर्वेत्तु" ( य० सं० १।१९ ) इत्यनेन प्रत्यग्ग्रीवमास्तीर्य सव्यहस्ताङ्गुलिस्पृष्टे एव कृष्णाजिने प्रागग्रां दृषदं कृष्णाजिनस्योपरि "ॐ धिषणाऽसि पर्वती प्रति त्वाऽदित्यास्त्वग्वेत्तु" ( य० सं० १।१९ ) इति मन्त्रेण निधाय, दृषदः पश्चाद्भागेऽवस्तात् उदगग्रां शम्यां "ॐ दिवः स्कम्भनीरसि" ( य० सं० १।१९ ) इति मन्त्रेण तथा प्रेरयेत् यथा दृषदः प्राचीनप्रवणता सम्पद्येत। ततः दृषदः उपरि उदगग्रामुपलां "ॐ धिषणाऽसि पार्वतेयी प्रति त्वा पर्वती वेत्तु" ( य० सं० १।१९ ) इति मन्त्रेण निदध्यात्। ततः "ॐ धान्यमसि धिनुहि देवान्"

१. एककपाले 'तप्यस्वे'ति, द्विकपाले 'तप्येथा'मिति विपरिणामः; समवेतार्थत्वात्।

२. अध्वर्योः पेषणे व्यापृतत्वात् अग्नीध एव तत्कर्तृत्वम्। तेनैव यौगपद्यं च उपसर्जन्यधिश्रयणस्य उपधानेन सह उपक्रान्तादौ पेषणात्पूर्वमेव कपालोपधानाव्यवधानेन विधानात् सिध्यति।

यत्र तु अध्वर्योः कार्यान्तरव्यापृतिर्नास्ति यथा चर्विष्ट्यां, तत्राध्वर्योरेव उपसर्जन्यधिश्रयणकर्तृत्वम्।

२

(य० सं० १।२०) इति मन्त्रेण [illegible]दि तण्डुलानोप्य "ॐ प्राणाय त्वा" (पिनष्मि) "ॐ उदानाय त्वा" (पिनष्मि) "ॐ व्यानाय त्वा" (पिनष्मि) (य० सं० १।२०) इति मन्त्रैः प्रति मन्त्रं तण्डुलान् पिंष्यात्।

अध्वर्युणा तण्डुलेषु पिष्यमाणेषु, आग्नीध्रेण कपालेषु नाप्यमानेषु च, ब्रह्मा पात्रान्तरादाज्यमाज्यस्थाल्यां "ॐ महीनां पयोऽसि" (य० सं० १।२०) इति मन्त्रेण प्रक्षिपेत्।

ब्रह्मणा च आज्ये निरुप्ते सति यजमानः "ॐ वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः" (य० सं० २।२१) इति मन्त्रेण कुशमुष्टिं प्रदक्षिणावृत्तं वत्सजानुसदृशं वेण्याकारं वा प्रादेशमात्रं वेदं कुर्यात्।

अध्वर्युः तण्डुलेषु पिष्टेषु दृषद उपरि वर्तमानानि पिष्टानि "ॐ दीर्घामनुप्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना" (य० सं० १।२०) इति मन्त्रेण कृष्णाजिने उपलया पातयेत्। ततः "ॐ चक्षुषे त्वा" (ईक्षे) (य० सं० १।२०) इति मन्त्रेण कृष्णाजिने पतितानि पिष्टानि विलोकयेत्। ततः पवित्रे पात्र्यां कृत्वा कृष्णाजिनात्पिष्टान्यादाय सपवित्रायां पात्र्यां "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। संवपामि" (य० सं० १।२१) इत्यनेन मन्त्रेणावपेत्। तत उत्थाय गार्हपत्यस्य पश्चादुपविशति वेदिमध्ये वा।

तत आग्नीध्रः स्फ्यं सव्ये गृहीत्वा, अधिश्रिता उपसर्जनीः उदगुद्वास्य, अध्वर्योर्दक्षिणेनानीय, पिष्टानामुपरि धृतस्य सपवित्रस्य अध्वर्युहस्तस्योपरि निनयेत्।

अध्वर्युश्च आग्नीध्रेण निनीयमाना उपसर्जनीः दक्षिणहस्तधृताभ्यां पवित्राभ्यां "ॐ समापः ओषधीभिः समोषधयो रसेन। सᳪं रेवतीर्जगतीभिः पृच्यन्ताᳪं सं मधुमतीर्मधुमतीभिः पृच्यन्ताम्" (य० सं० १।२१) इति मन्त्रेण प्रतिगृह्णीयात्।

अग्नीच्च तथा निनयनं कुर्याद्यथा अध्वर्योर्मन्त्रान्ते ग्रहणं सम्पद्येत।

ततः अध्वर्युः "ॐ जनयत्यै त्वा संयौमि" (य० सं० १।२२) इति मन्त्रेण उदकं पिष्टानि च संयौति (मिश्रयति)। समं विभज्य, द्वौ पिण्डौ कृत्वा, पात्र्यामुदक्संस्थौ निधाय, "ॐ इदमग्नेः" (य० सं० १।२२) इति दक्षिणस्थं पिण्ड-

---

१. अध्वर्योः पेषणे व्यापृतत्वात् अग्नीधश्च कपालोपधाने व्यापृतत्वात् "पिंष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम्" इत्यत्र अन्यशब्देन ब्रह्मैव ग्रहीतुमर्ह इति भावः। "निरुप्यमाणं वेदोऽसीति यजमानो वेदं करोति" इति सूत्रात् (का० श्रौ० ३।३।२२) यजमानस्यैव आज्यनिर्वापकर्तृत्वं केचिद्वदन्ति। तन्न युक्तम्। सर्वकर्मकरणार्थमृत्विजां परिक्रीतत्वेन "अध्वर्युः कर्मसु वेदयोगात्" "वचनविरोधाभ्यामन्यः" (का० श्रौ० १।८।२९-३०) इति सूत्रकारप्रस्थानाच्च ऋत्विजो ब्रह्मण एव आज्यनिर्वापकर्तृत्वौचित्यात्। निरुप्येति क्त्वाप्रयोगस्तु 'स्थिते ब्रह्मणि' इत्यध्याहारेण स्थितिक्रियासमानकर्तृकत्वोपपादनेनोपपद्यते। नहि श्रौतक्रियासमानकर्तृकत्वमेव क्त्वाप्रयोगे नियतं निमित्तम्। "[illegible] नरः श्रुत्वा सर्वपापैः प्रमुच्यते" इत्यादौ व्यभिचारात्। "न वै ब्रह्मा प्रचरति, न स्तुते, न शंसति" इति तु अन्यस्य ऋत्विजः कर्तृत्वसंभवे एव बोध्यम्। स्पष्टं चेदमत्रैव कर्कभाष्ये।

१. अयं मन्त्रः अपामभिधायकत्वात् तत्कार्यापन्ने पयसि दधनि घृते च विपरिणम्यते।

२. संयवनं पिण्डार्थत्वाच्चरौ न भवति, कार्यलोपात्। पिष्टचरौ तु एकोऽन्नकार्यसत्त्वात् प्रवर्तते एव। पात्र्यामावापोऽपि संयवनाभावाच्चरौ न प्रवर्तते।

मालभ्य "ॐ इदमग्नीषोमयोः" ( य० मं० १।२२ ) इति मन्त्रेण उत्तरस्थं पिण्डमालभेत[1]।

ततो ब्रह्मा "ॐ इषे त्वा" ( अधिश्रयामि ) ( य० सं० १।२२ ) इति मन्त्रेण गार्हपत्यस्यारम्य मध्ये एव दक्षिणतः आज्यमधिश्रयेत्। अग्नेरुपरि आज्यस्थालीं निदध्यादित्यर्थः।

ब्रह्मणि आज्यस्थालीं निदधत्येव सति अध्वर्युः अष्टसु कपालेषु प्रथमं पुरोडाशं स्फ्योपग्रहं कृत्वा, "ॐ घर्मोऽसि विश्वायुः" ( य० सं० १।२२ ) इति मन्त्रेण अधिश्रयेत्।

तस्मिन्नेव काले आग्नीध्रः एकादशसु कपालेषु द्वितीयं पुरोडाशं "ॐ घर्मोसि विश्वायुः" इति मन्त्रेण अधिश्रयेत्।

ततः अध्वर्युराग्नीध्रश्च यथाधिश्रयणं प्रथमद्वितीयौ पुरोडाशौ[2] "ॐ उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्" ( य० मं० १।२२ ) इति मन्त्रेण यावत्कपालं प्रथयताम् ( अतिपृथून् कुर्याताम् )। एवमेव "ॐ अग्निष्टे त्वचं मा हिंसीत्" ( य० सं० १।२२ ) इति मन्त्रेण स्वस्वपुरोडाशमद्भिरभिमृशेतां सकृत् त्रिर्वा। त्रिः पक्षेऽपि मन्त्रः सकृदेव। अभिमर्शनं च प्रथने क्रियमाणे यत्र क्वचन विदीर्णं भवति तत्संधानम्।

1. दर्शेष्टौ 'इदमिन्द्राग्न्योः' इत्येवमालभेत।

आलम्भस्य समविभागपूर्वकत्वात् तस्य च भिन्नभिन्नपुरोडाशसंपत्तिरूपदृष्टप्रयोजनार्थत्वात् एकके आग्नावैष्णवादौ तदभावेन विभागाभावात् तत्पूर्वक आलम्भोऽपि न प्रवर्तते। तस्यापि "असंहरिष्यन्नालभते" इत्यनेन असंहारार्थतया दृष्टार्थत्वावगमात्। विनिगमकाभावेन उभयोरालम्भस्य दृष्टार्थत्वप्रौव्येण अग्नीषोमीयालम्भस्यादृष्टार्थत्वकल्पने मानाभावात्।

समं विभज्यालभते इत्यनेनानैव सिद्धे असंहरिष्यन्निति कथनं यस्य यदा असंहार इष्टस्तस्य तदा आलम्भो यथा स्यादित्येतदर्थम्। ततश्च चरूणां फलीकरणान्ते पौष्णस्य ईक्षणान्ते आलम्भः।

2. अध्वर्य्वग्नीध्रोः पुरोडाशयोर्व्यापृतत्वात्। उपसदादौ तु अविरोधादध्वर्योरेवाधिश्रयणकर्तृत्वम्।



ततः पात्र्या अङ्गुलीनां च पिष्टलेपापनयनं प्रक्षालनं च कार्यम्[1]। ततः अध्वर्युः गार्हपत्यादङ्गारमादाय "ॐ अन्त रितं रक्षोऽन्तरिता अरातयः" ( का० श्रौ० २।५।२१ ) इति मन्त्रेण आज्यस्थालीपुरोडाशान् परितः प्रदक्षिणमङ्गारं भ्रमयेत्। ततोऽङ्गारं गार्हपत्ये प्रक्षिप्य, हस्तस्याग्रादक्षिण्येन परिवर्तनं कृत्वा, अप उपस्पृश्य, "ॐ देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधिनाके" ( य० मं० १।२२ ) इति मन्त्रेण दर्भतृणैर्ज्वलद्भिः प्रथमं पुरोडाशं श्रपयित्वा, एवमेव द्वितीयं श्रपयेत्। ततः शृताशृतज्ञानाय "ॐ मा भेर्मा संविक्थाः" ( य० मं० १।२३ ) इति मन्त्रेण क्रमेण पुरोडाशावालभेत। अशृतौ चेत्पुनः श्रपणप्रक्षेपः। शृतौ चेत् "ॐ अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात्" ( य० मं० १।२३ ) इति मन्त्रेण वेदेन, उपवेषेण वा तप्ततरेणाङ्गारमिश्रेण भस्मनाऽऽच्छादयेत्।

ततः पात्र्यङ्गुलिप्रक्षालनजलं पात्रीस्थमेव गार्हपत्यदीप्तैस्तृणैर्ज्वलद्भिस्तापयित्वा, विहारस्योत्तरतः स्फ्येन त्रीन् गर्तान् प्राक्संस्थान् कृत्वा, परस्परं संसर्गम् अप्राप्नुवन् प्रत्यक्संस्थं "ॐ त्रिताय त्वा" ( निनयामि ) "ॐ द्विताय त्वा" ( निनयामि ) "ॐ एकताय त्वा" ( य० मं० १।२३ ) इति प्रतिमन्त्रं क्रमेण निनयेत्।

प्रतिनिनयनं च "ॐ इदं त्रितायाप्त्याय न मम" "ॐ इदं

1. "पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयति" ( का० श्रौ० २।५।२५ ) इत्यनेन प्रक्षालनोदकस्य "पिष्टलेपान्जुहोति" ( का० श्रौ० ३।८।१ ) इत्यनेन पिष्टलेपानां च प्रतिपत्तिविधानात् ( अर्थात् प्राप्तयोरनयोः कर्मानङ्गत्वात् ) अभिमर्शनानन्तरं पर्यग्निकरणात्पूर्वं तयोरनुष्ठानं व्यवस्थापितं कर्काचार्यैः।

2. भाष्ये पक्वतानस्य दर्शनादेवोपपत्तेर्नालम्भः।

द्वितायास्याय न मम" "ॐ इदमेकतायास्याय न मम" इत्येवं त्यागं क्रमेण यजमानः कुर्यात् ।

ततः अध्वर्युः अन्वाहार्यं ( दक्षिणार्थमोदनं ) चतुर्णाम् ऋत्विजां तृप्तिपर्यन्तभोजनसमर्थं दक्षिणाग्नौ श्रपणार्थमधिश्रयेत । जलं चात्र प्रणीतं लौकिकं वेति कर्काचार्याः ।

अत्र वा यजमानस्य व्रतग्रहणम् । ततोऽध्वर्युः आहवनीय पश्चाद्भागे पश्चात् प्रथमः द्वितीयः तृतीयः चतुर्थः इति; मध्ये प्रथमः द्वितीयः तृतीय इति; प्राग्भागे प्रथमः द्वितीयः तृतीय इति वेदिं मिमीत

आहवनीयाग्निमभितः अंसौ मानव्यौ । पश्चात् श्रोणि च कल्पयेत ।

ततः वेदिं परिगृह्य पूर्वतृतीये उत्तरतः अग्नीत् उत्करं कुर्यात् ।

ततोऽध्वर्युः पूर्वमामादितवेदितृणमद्दितं स्फ्यम् "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददेऽध्वरकृतं देवेभ्यः" ( य० सं० १।२४ ) इति मन्त्रेणादाय सव्यहस्ते सतृणं स्फ्यं निधाय, दक्षिणेन हस्तेन आलभ्य, "ॐ इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः" ( य० सं० १।२४ ) इति सस्वरं जपति । स्नम्वयजुर्दुरगादर्वाक् हस्तमार्जनेन तीक्ष्णीकृतेन स्फ्येन पृथिव्याः आत्मनश्च स्पर्शो न कर्तव्यः ।

ततः तत्तृणं "ॐ पृथिव्यै वर्मासि" (का० श्रौ० २।६।८) इति मन्त्रेण वेद्यामुदगग्रं निधाय, "ॐ पृथिवि देवयजन्योषध्यास्ते मूलं माहिंसिषम्" ( य० सं० १।२५ ) इति मन्त्रेण तृणस्याधस्तात्तु, तृणे एव वा स्फ्येन प्रहरेत् । ततः "ॐ व्रजं गच्छ गोष्ठानम्" ( य० सं० १।२५ ) इति मन्त्रेण

---

१. अथ वेद्यादिसाधनप्रकारः ।

गार्हपत्यमध्यादाहवनीयमध्यपर्यन्तं मध्येऽन्तरम् अष्टौ, एकादश, द्वादश वा पदानि । गार्हपत्यमध्यत्वेन कल्पितं स्थानं केन्द्रं परिकल्प्य सार्धत्रयोदशाङ्गुलमितत्रिज्यया वृत्तं कार्यम् । इदं गार्हपत्याग्नेः स्थानम् । आहवनीयस्थानमायामतो विस्तारतश्च हस्तमितम् । गार्हपत्याहवनीयान्तरस्य द्वादशपदपरिमितत्वपक्षे तदन्तरस्य षड्हस्तात्मकत्वात् षड्हस्तां रज्जुं तदीयषष्ठभागेन हस्तात्मकेन संयोज्य अर्धाष्टमहस्तां रज्जुं गृहीत्वा, तस्या अन्तयोः पाशौ कृत्वा, मध्ये च तृतीये तृतीये भागे चिह्नं कृत्वा; एकं पाशं गार्हपत्यमध्यशङ्कौ आसज्य, द्वितीयपाशं आहवनीयमध्यशङ्कौ आसञ्जयेत् । रज्जुमध्यवर्तिनोर्द्वयोश्चिह्नयोः पश्चिमचिह्नस्थाने रज्जुं गृहीत्वा दक्षिणत आकर्षयेत; यत्र तच्चिह्नं पतति तत्र चिह्नं कृत्वा, तस्मात्स्थानात् उत्तरतः सार्धचत्वाङ्गुलव्यवहिते देशे शङ्कुर्देयः । शङ्कुस्थानं केन्द्रत्वेन परिकल्प्य, यत्राधिकैकविंशत्यङ्गुलमितत्रिज्यया वृत्तं कार्यम् । वृत्तमध्ये केन्द्रसंलग्ना परिधिपूर्वभागमारभ्य परिधिपश्चिमं यावत् सरलरेखा कार्या । इयं च व्यासतन्तुना व्यवह्रियते सांशत्रयैः । रेखात उत्तरभागस्य त्यागः कार्यः । वृत्तस्य दक्षिणार्धं दक्षिणाग्निस्थानम् । पूर्वोक्तयोश्चिह्नयोः पूर्वचिह्नस्थाने रज्जुं गृहीत्वा, उत्तरत आकर्षणे यत्र चिह्नं पतति तदुत्करस्थानम् । आहवनीयमध्यशङ्कुसकाशात्पश्चिमतस्त्र्यरत्निव्यवहिते देशे शङ्कुर्देयः । तच्छङ्कुसकाशात् दक्षिणत उत्तरतश्च द्व्यरत्निव्यवहिते देशे शङ्कुर्देयः । आहवनीयप्राचीशङ्कुसकाशात्सार्धारत्निव्यवहिते देशे दक्षिणत उत्तरतश्च शङ्कुर्देयः । ननु च कोणस्थशङ्कुसूत्रार्पणात् विषमचतुरस्रं भवति । प्राचीशङ्कुमारभ्य पश्चिमशङ्कुपर्यन्तं कोणद्वयवेष्टनेन सूत्रं प्रदेयम् । तत्सूत्रार्धपरिमितेन सूत्रेण प्राचीशङ्कुमारभ्य दक्षिणकोणस्थशङ्कुवेष्टनेन दक्षिणतः, उत्तरकोणस्थशङ्कुवेष्टनेन उत्तरतश्च शङ्कुर्देयः । ताभ्यां शङ्कुभ्यां पूर्वोक्तसूत्रार्धचतुर्थांशेन वेदिमध्ये संग्रहौ कार्यौ । द्वादशाङ्गुलं पदम् । अष्टयवमङ्गुलम् । चतुर्विंशत्यङ्गुलो हस्तः ॥ इति वेद्यादिसाधनप्रकारः ।

१. पितृयज्ञे देवपितृभ्य इति विपरिणामः ।

२. पितृयज्ञे 'देवयजनीत्यस्य' स्थाने 'देवपितृयजनीति प्रयोगः' वेदेर्ग्रहप्रधानार्थत्वात् । परिसमूहनादीनां वेदिसंस्कारात्मत्वमेव प्रवृत्तत्वात् वेदेरेवात्र पृथिविशब्दाभिधेयत्वात् । एवमुत्तरमन्त्रे 'देवयजनादित्यस्य' स्थाने 'देवपितृयजनादिति' प्रयोगः पितृयज्ञे ।

३. शाखान्तरे व्रजं गच्छेत्यादीनां पुरोषादानादिषु अवयवशो विनियोगविधानात् अवयवशः पुरीषादानादिषु एषां मन्त्राणां प्रयोगः प्रदर्शितः, न तु प्रहरणशेषत्वमङ्गीकृतम्, कर्काचार्याणामसंमतत्वात् ।

प्रहरणेनोत्खातं पुरीषं हस्तेन गृहीत्वा "ॐ वर्षतु ते द्यौः" ( य० सं० १।२५ ) इति मन्त्रेण वेदेः प्रहरणदेशे प्रेक्ष्य, गृहीतं पुरीषम् "ॐ बधान देव सवितः परमस्यां पृथिव्याᳬ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्" ( य० सं० १।२५ ) इति मन्त्रेण उत्करे प्रक्षिपेत् ।

ततः "ॐ अपाररुं पृथिव्यै देवयजनाद्वध्यासम्" ( य० सं० १।२६ ) इति मन्त्रेण पूर्वप्रहृतात् उत्तरस्यां तृणस्याधस्तात् तृणे वा स्फ्येन द्वितीयवारं प्रहरेत् । उदकोपस्पर्शः[1] । ततः पूर्ववत्पुरीषादान–वेदिप्रेक्षण–पुरीषप्रक्षेपणानि कुर्यात् ।

ततोऽग्नीत् स्फ्यं गृहीत्वा "ॐ अररो दिवं मा पप्तः" ( य० सं० १।२६ ) इति मन्त्रेण पाणिभ्यामुत्करमभिन्यस्यति ( अधः पातयतीत्यर्थः ) । उदकोपस्पर्शः ।

ततः अध्वर्युः "ॐ द्रप्सस्ते द्यां मा स्कन्" ( य० सं० १।२६ ) इति मन्त्रेण द्वितीयप्रहृतादुत्तरतः तृणस्याधस्तात् तृणे वा तृतीयवारं प्रहृत्य पुरीषादान–वेदिप्रेक्षण–पुरीषनिरसनानि पूर्ववत्कृत्वा तृतीयप्रहृतादुत्तरे तृणस्याधस्तात्तृणे वा तूष्णीं चतुर्थवारं प्रहृत्य तूष्णीमेव सतृणपुरीषादानम्, उत्खानप्रदेशप्रेक्षणं, सतृणस्य पुरीषस्य उत्करे प्रक्षेपणं च कुर्यात् ।

ततः "ब्रह्मन्, पूर्वं परिग्रहं परिग्रहीष्यामि" इति ब्रह्माणमामन्त्रयेत् ।

ततो ब्रह्मा "ॐ बृहस्पते परिगृहाण वेदिᳬ सुगावो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथताᳬ साध्वन्तर-

1. "अररुर्ह नामासुर आस" इति श्रुतौ अररोः राक्षसाभिधानात् मन्त्रस्य रक्षोऽभिधायकत्वात् उदकस्पर्शः । "रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्याप उपस्पृशेत्" ( का० श्रौ० १।१०।१४ ) इति सूत्रेण राक्षसादिमन्त्राभिधाने आत्मालम्भे च उदकोपस्पर्शविधानात् ।



हिᳬस्रा पृथिवी देवी देव्यस्तु" ( का० श्रौ० २।२।१० ) इति, "देवता वर्धय त्वम्" इत्यादि घेहीत्यन्तं च उपांशु पठित्वा, "ॐ परिगृहाण" इत्युच्चैः अध्वर्युम् अनुजानीयात् ।

ततोऽनुज्ञातोऽध्वर्युः स्फ्येन दक्षिणतः "ॐ गायत्रेण त्वा च्छन्दसा परिगृह्णामि" ( य० सं० १।२७ ) इति मन्त्रेण वेदेः नैर्ऋतकोणादारभ्य आहवनीयखरपर्यन्तां रेखां कृत्वा, "ॐ त्रैष्टुभेन त्वा च्छन्दसा परिगृह्णामि" ( य० सं० १।२७ ) इति मन्त्रेण वेदेः पश्चिमपार्श्वे दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तां रेखां कृत्वा "ॐ जागतेन त्वा च्छन्दसा परिगृह्णामि" ( य० सं० १।२७ ) इति मन्त्रेण वेदेरुत्तरभागे उत्तरश्रोणिमारभ्य आहवनीयखरपर्यन्तां रेखां कुर्यात् । इदं परिग्रहणं च 'इयती वेदिः कर्तव्या' इति ज्ञापनार्थम् ।

ततोऽध्वर्युः वेद्यां प्रागायताः उदक्संस्थास्तिस्रो रेखास्तूष्णीं स्फ्येन कृत्वा "ॐ हर त्रिः" इति अग्नीधं ब्रूयात्[1] ।

ततोऽग्नीत् यथोल्लिखिताभ्यो रेखाभ्यः पांसूनुद्धृत्य उत्करे प्रक्षिप्य ता रेखाः संमृशेत् ( मार्जनेन समीकुर्यात् ) ।

ततोऽध्वर्युः अभ्रिमादाय प्रदक्षिणं सर्वतो वेदिं मांसं त्र्यङ्गुलं खनति[2] । ततो "ब्रह्मन्नुत्तरं परिग्रहं परिग्रहीष्यामि" इति ब्रह्माणमामन्त्रयेत् ।

1. वरुणप्रघासेषु वेदिद्वित्वेन 'हर त्रिभिः' इति साम्यामभिसम्बध्य प्रयोगः कर्तव्यः ।

2. कात्यायनेन पूर्वमन्वाहार्याधिश्रयणानन्तरं निर्दिष्टस्य वेदिकरणस्य "अत्र वेदिकरणं यथोक्तम्" ( का० श्रौ० २।६।२२ ) इति वेदिमानं तदनन्तरं विधानात्तथैवानुष्ठानम् । न च तथैव वेदिमानकरणमत्र ग्रन्थेऽनिर्दिष्टमिति वाच्यम् । खननस्यैव वेदिस्वरूपप्रकाशकत्वेन स्वरूपनिष्पादनानुकूलव्यापारार्थकेन कृञ्धातुना समभिव्याहाराद् वेदिस्वरूपनिष्पादनानुकूलव्यापारस्वरूपखननस्यैवाभिधानेन

ब्रह्मा च पूर्ववत् "ॐ बृहस्पते परिगृहाण" इत्यादिमन्त्रमुपांशु पठित्वा "ॐ परिगृहाण" इत्युच्चैः अध्वर्युमनुजानीयात् ।

ततः स्फ्येन अध्वर्युः वेदेः दक्षिणपार्श्वे दक्षिणश्रोणिमारभ्याहवनीयस्तरपर्यन्तं "ॐ सुक्ष्मा चासि शिवा चासि" (य० सं० १।२७) इति मन्त्रेण रेखां कृत्वा, पश्चिमपार्श्वे "ॐ स्योना चासि सुषदा चासि" (य० सं० १।२७) इति मन्त्रेण दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं रेखां कृत्वा, उत्तरपार्श्वे उत्तरश्रोणिमारभ्य आहवनीयस्तरपर्यन्तम् "ॐ ऊर्ज्जस्वती चासि पयस्वती च" (य० सं० १।२७) इति मन्त्रेण रेखां कुर्यात् ।

ततः "ॐ पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् । यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासो ऽअनुदिश्य यजन्ते" (य० सं० १।२८) इति मन्त्रेण पुरस्तादारभ्य प्रतीचीं दिशं यावत् अनुमृज्यात् (स्फ्येनैव समां कुर्यात्) । प्राक्प्रवणता च वेदेः अत्रैव सम्पादनीया ।

ततः प्रोक्षणीर्गृहीत्वा वेदेरुपरिष्टात्समीपे धारयेत् ।

प्रोक्षणीषु धार्यमाणासु अग्नीत् स्फ्यमुद्यम्य "ॐ प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढि पत्नीᳬं सन्नह्याज्येनोदेहि" इति मन्त्रेण अध्वर्युम् युगपत् सर्वकार्यार्थम्

तावन्मात्रस्यैवाभिधानात् । अत एवोत्तरत्र परिसमूहनादीनां सिद्धिः । वेदिमानं विना तु स्थलविशेषाज्ञानाच्च किञ्चिद्विपरीते क्रियेति बोध्यम् ।

अंसयोरपि वेद्यन्तर्गतत्वात् स्रक्तुल्लेखनम् । "अग्रेण बर्हींऽषि निदधात्यंसदेशे" इति सूत्रकारेण अंसयोः स्तरणसूचनात् तयोर्वेद्यन्तर्गतत्वम् ।



अध्येषयेत्[1] । प्राक्स्तरणाद्वेदिं कश्चिदपि नावमृशेत् । तृणानि हवींषि च प्रधानयागानुष्ठानं यावत् न स्पृशेत् ।

ततोऽध्वर्युः प्रक्षालनार्थम् उदकमानाय्य "ॐ द्विषतो वधोऽसि" (य० सं० १।२८) इति मन्त्रेण स्फ्यमुदगग्रम् उत्करे प्रक्षिपेत् । ततः स्फ्यं गृहीत्वा, उत्करे पाणी प्रक्षाल्य, प्रणीतानां पश्चाद्भागे प्रागग्रम् उदगग्रं वा स्फ्यं निधाय, वेदिमध्ये उदगग्रामग्निहोत्रहवणीमानाय्य, प्रणीतानां पश्चात्स्फ्यस्योत्तरतः प्रागग्रमिध्ममासाद्य, इध्मस्योत्तरतः प्रागग्रं बर्हिरासादयेत् ।

ततः खादिरं स्रुवमादाय "ॐ प्रत्युष्टᳬं रक्षः प्रत्युष्टा अरातयः" (य० सं० १।२९) इति मन्त्रेण गार्हपत्ये प्रतप्य,

१. अत्र प्राधान्यात् प्रैषकर्तृत्वमध्वर्योः प्रैषार्थकर्तृत्वमग्नीधः निकृष्टत्वादिति जैमिनिः । "स्ववंवाऽविरोधात्" "संप्रैषावचनाच्च" इति कात्यायनसूत्राभ्याम् (का० श्रौ० २।६।२८-२९) अध्वर्योः प्रैषार्थकर्तृत्वम् । उत्सर्गतः समाख्यया प्राप्तस्य प्रोक्षण्यासादनादिकर्मकर्तृत्वस्य मुख्यस्य विना वचनमपवदितुमशक्यत्वात् । शतपथब्राह्मणे च "स यदि कामयेत ब्रूयादेतदु काम्यतापि नाद्रियेत स्वयमुह्यैवैतद्वेद इदमतः कर्म" इति स्पष्टमेव प्रैषार्थप्रोक्षण्यासादनादिकर्मकर्तृत्वं श्रूयते । प्रैषमात्रकरणे हि न मुख्यं कर्तृत्वमध्वर्योः सिध्यति । "तत्प्रयोजको हेतुश्च" इत्यनेन हि पाणिनिसूत्रेण तृतीयादिकार्यार्थं कर्तृत्वस्य अतिदेशविधानाच्च मुख्यं तत्सिध्यति । नहि णिच्छक्त्यतिदेशविधानात् तुल्यगत्यारम्भकत्वादिकं सिध्यति । तथा च स्वरसतः प्राप्तस्य मुख्यकर्तृत्वस्य प्रैषमात्रकरणेनानुपपत्तेः प्रैषार्थकर्तृत्वमध्वर्योरेव । अग्नीधो निकृष्टत्वेऽपि अध्येषणकर्तृत्वमुपपद्यते एवेति न काचिदनुपपत्तिरिति कर्काचार्याः ।

वरुणप्रघासेषु इध्मशब्दो बर्हिःशब्दश्च न विपरिणम्यते । अग्नीन्धनत्वस्य बर्हिष्ट्वजातेश्च न्यूनाधिकसंख्याकेषु अविशेषेणैव वृत्तेः । गृहमेधीयादौ उपभृतोऽभावात् स्रुग्बहुत्वाभावेन यथार्थं विपरिणामः ।

पत्नीशब्दस्य अनेकपत्नीकेऽपि अविपरिणामः, एकवचनान्तस्यैव समाम्नानात् । प्रकृतावूहाभावात् ।

प्रोक्षणीरासादयेत्यादौ प्रैषार्थकर्तृगतमपि वचनं प्रकृतौ समवायात् वरुणप्रघासेषु प्रैषार्थकर्त्रोः अध्वर्युप्रतिप्रस्थात्रोः द्वित्वात् 'प्रोक्षणीरासादयतम्' इत्येवमादिरूपेण विपरिणामः ।

अप उपस्पृश्य, अग्निसमीपात्प्राचीं गत्वा, वेदाग्रैरन्तरतः मूलादारभ्याग्रपर्यन्तं प्राक्संस्थम् "ॐ अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा व्वाजेध्यायै संमार्ज्मि" ( य० सं० १।२९ ) इति मन्त्रेण संमृज्य, बहिःप्रदेशे स्रुवपुष्करस्य अधोदेशादारभ्य मूलपर्यन्तं प्रत्यक्संस्थमनेनैव मन्त्रेण संमृज्यात्। ततोऽग्निमुपगम्य, पूर्ववत्प्रतप्य, अप उपस्पृश्य, अग्नीधे समर्पयेत्।

ततो जुहूमादाय प्राचीं गत्वा "ॐ अनिशिताऽसि सपत्नक्षिद्वाजिनीं त्वा व्वाजेध्यायै संमार्ज्मि" ( य० सं० १।२९ ) इति मन्त्रेण वेदाग्रैः अन्तरतः मूलादारभ्याग्रपर्यन्तं संमृज्य, वेदमूलैः बहिःप्रदेशे जुहूपुष्करस्य अधोभागादारभ्य मूलपर्यन्तमनेनैव मन्त्रेण प्रत्यक्षं संमृज्य, अग्निसमीपं गत्वा पूर्ववत्प्रतप्य, अप उपस्पृश्य, अग्नीधे समर्पयेत्।

एवमेव उपभृतं ध्रुवां च संमृज्य, प्रतप्य, अप उपस्पृश्य, अग्नीधे समर्पयेत्। ततस्तूष्णीं प्राशित्रहरणे भृतावदानं पुरोडाशपात्र्यौ इडापात्रीं च प्रत्येकं प्राङ् उत्क्रम्य, तूष्णीमन्तर्बहिश्च पूर्ववत्संमृज्य, अग्निमुपगम्य, तूष्णीं प्रतप्य, अप उपस्पृश्य, अग्नीधे समर्पयेत्। ततः सम्मार्जनानि उत्करे प्रक्षिपेद् नाहवनीये। शतपथब्राह्मणे "तदु तथा न कुर्यात्" इति निषेधश्रवणात्।

ततः अध्वर्युः मुञ्जमयं त्रिवृत् योक्त्रमादाय, गार्हपत्यान्नैर्ऋत्यां दिशि ईशानाभिमुखीम् ऊर्ध्वजानुं पूर्वमेवोपविष्टां यजमानपत्नीं परिधानवस्त्राद् बहिः तेन योक्त्रेण "ॐ अदित्यै रास्नाऽसि" ( य० सं० १।३० ) इति मन्त्रेण प्रदक्षिणं वेष्टयित्वा, दक्षिणं पाशमुत्तरे अङ्कुस्थानीये प्रतिमुच्य, पुनर्वेष्टयित्वा, योक्त्रस्यान्तम् "ॐ विष्णोर्वेष्पोऽसि" ( य० सं० १।३० ) इति मन्त्रेणोर्ध्वमुद्गृह्णेत्। ग्रन्थिं न कुर्यात्।

ततः "ॐ ऊर्ज्जे त्वा" (उद्वासयामि) ( य० सं० १।३० ) इति मन्त्रेण आज्यमुद्गुद्वास्य, पश्चादानीय, 'पत्न्याज्यमवेक्षस्व' इति पत्नीमध्वर्युरध्येपयेत्।

पत्नी च "ॐ अदब्धेन त्वा चक्षुषाऽवपश्यामि। अग्नेर्जिह्वाऽसि सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे यजुषे" ( य० सं० १।३० ) इति मन्त्रेणाज्यमवेक्षते।

ततोऽध्वर्युः पत्न्या अग्रतः आज्यं गृहीत्वा, प्रोक्षणीभ्यः पश्चाद्वेदिमध्ये तदासाद्य, वेदं गृहीत्वा, प्रोक्षणीभ्यः पवित्रे आदाय, "ॐ सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः" ( य० सं० १।३१ ) इति मन्त्रेणाज्यमुत्पूय, स्फ्यं गृहीत्वा, आज्यलिप्ताभ्यामेव पवित्राभ्याम् "ॐ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः" ( य० सं० १।३१ ) इति मन्त्रेण प्रोक्षणीः पूर्ववत् इध्माबर्हिषोः प्रोक्षणार्थम् उत्पुनीयात्। अतस्तदभावे न भवति।

१. द्रव्यैक्येऽपि स्थानभेदे मन्त्रावृत्तिः। अग्निसंमार्गे "तूष्णीमुपरि" ( का० श्रौ० ३।१।१४ ) इत्युक्त्या सूत्रकारेण स्थानभेदे मन्त्रावृत्तिबोधनात्।

१. 'विष्णोर्वेष्प' इत्यत्र "विष्लृ व्याप्तौ" इति धातोः "पानीविषिभ्यः पः" इत्यौणादिकसूत्रेण तृतीयपादस्थेन पप्रत्यये वेष्प इति रूपं निष्पद्यते। अत्र वेष्य इति पाठकल्पनम् एतदौणादिकसूत्राज्ञानमूलकम्। पवर्गीयघटितपाठस्य आसेतुहिमाचलं सम्प्रदायसिद्धत्वात्। अन्तस्थघटितलेखस्य लेखकप्रमादेन भाष्यादिपुस्तकेषु सञ्जातत्वात्। [illegible] दृष्युत्पत्तिं च लखनऊनगरमुद्रितभाष्ये स्पष्टमुपलभ्यते इति ततो निरसनीयः संशयः संदिग्धानैः [illegible]।

२. द्रव्यसंस्कारत्वात् पत्न्या रजस्वलात्वेऽप्यध्वर्युरेवेक्षते।

३. "एकद्रव्ये मार्जने वेदेनोपपद्यमान" "स्रुवेनान्यत्र" "कुशैरस्रग्षु" ( का० श्रौ० ११।०।१–१–८ ) इति सूक्ते भाष्यादिस्कन्दनिवारणार्थं वेदात्रिभिरूपग्रहविधानात् वेदाद्रिमहमनुष्यते।

ततः "ॐ तेजोऽसि शुक्रमस्यमृतमसि" ( य० सं० १।३१ ) इति मन्त्रेण आज्यमवेक्षेत । ततः सव्येन जुहूं वेदं च गृहीत्वा दक्षिणेन स्रुवमादाय तेनाज्यस्थाल्याः सकाशात्- ध्णीमाज्यमादाय जुह्वाम् "ॐ धाम नामासि प्रियं देवानाम- नाधृष्टं देवयजनमसि" ( य० सं० १।३१ ) इति मन्त्रेण सकृन्निनीय त्रिस्तूष्णीं निनयेत् । तत उपभृति "ॐ धाम नामासीति" इति मन्त्रेण सकृन्निनीय सप्तकृत्वस्तूष्णीं निनयेत् । उपभृति चतुर्गृहीतात् जुह्वाज्यादल्पमेव गृहीतं यथा स्यात्तथा अष्टकृत्वोऽपि निनयेत् । ततो ध्रुवायाम् "ॐ धाम नामासीति" मन्त्रेण सकृन्निनीय त्रिस्तूष्णीं निनयेत् । ततो वेदिमध्यादाज्य- स्थालीमादाय कचित्सुगुप्ते निदध्यात् ।

ततः इध्मं विस्रंस्य "ब्रह्मन्निध्मं प्रोक्षिष्यामि" इति ब्रह्माणमामन्त्रयेत् ।

ततो ब्रह्मा "ॐ प्रोक्ष यज्ञम्" इत्यादिमन्त्रमुपांशु पठित्वा "ॐ३प्रोक्ष" इत्युच्चैरध्वर्युमनुजानीयात् ।

ततोऽध्वर्युः अग्निहोत्रहवणीस्थाः प्रोक्षणीरादाय "ॐ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि" ( य० सं० २।१ ) इति मन्त्रेण प्रोक्षणीभिरिध्मम् अन्यथं प्रोक्ष्य "ॐ वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि" ( य० सं० २।१ ) इति मन्त्रेण वेदिं बर्हिःस्तरणार्थं प्रोक्ष्य, अग्नीत्समर्पितं बर्हिः प्रणीताहवनीयान्तरालेन प्रतिगृह्य, वेद्यां प्रागग्रन्थि उदगग्रम् आसाद्य "ब्रह्मन् बर्हिः प्रोक्षिष्यामि" इति ब्रह्माणमामन्त्र्य

१. "सकृन्मन्त्र" ( का० श्रौ० २।७।९ ) इति सूत्रात् ।

२. अध्वर्यभावे अग्रभूपेक्ष्यतां परिधिषु च मेध्मस्य प्रोक्षणम् । एवं गृहमेधीये बर्हिःस्तरणाभावेन वेदेर्न प्रोक्षणम् ।



तेन च "ॐ प्रोक्ष यज्ञम्" इत्यादिमुपांशु पठित्वा "ॐ३प्रोक्ष" इति उच्चैरनुज्ञातोऽध्वर्युः "ॐ बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि" ( य० सं० २।१ ) इति मन्त्रेण बर्हिः प्रोक्ष्य, प्रोक्षणीशेषं समस्तम् "ॐ अदित्यै व्युन्दनमसि" ( य० सं० २।२ ) इति मन्त्रेण बर्हिर्मूलेषु निनयेत् । ( शेषस्य नाशदोषादौ बर्हिर्मूलसेचनं संस्कारार्थं लौकिकोदकेन कर्तव्यमेव ) ।

ततः पवित्रे प्रणीतासु निधाय बर्हिर्विस्रंस्य "ॐ विष्णोः स्तुपोऽसि" ( य० सं० २।२ ) इति मन्त्रेण बर्हिर्मूलकस्य पूर्वस्मात्प्रदेशात् त्रिमुष्टिमितं प्रस्तरं गृह्णीयात् । ततस्तं प्रस्तरं तूष्णीं ब्रह्मणे प्रदाय, बर्हिःसन्नहनं विस्रंस्य, दक्षिणस्यां वेदिश्रोणौ निधाय, अन्यैर्बर्हिस्तृणैराच्छाद्य, वेद्यां पतितं तृणपर्णकाष्ठादिकं काष्ठेनैवादाय उत्करे निरस्येत् ।

ततः स्फ्यं निधाय दर्भपूलकात्तृतीयं भागमादाय "ॐ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यः" ( य० सं० २।२ ) इति मन्त्रेण दक्षिणांसादारभ्योत्तरांसं यावत् प्रागग्राणि बर्हींषि स्तृणीयात् । ततोऽवशिष्टार्धभागमादाय, पूर्वं स्तृतस्य बर्हिषो मूलान्याच्छादयन् ततः पश्चात् मन्त्रेणैव स्तृणीयात् । ततः शेषमादाय, द्वितीयवारं स्तृतस्य मूलान्याच्छादयन् ततः पश्चात् स्तृणीयात् ( बर्हिषा आच्छादयेदित्यर्थः ) ।

तत इध्मात्समिधमादाय, ब्रह्मणो हस्तात्प्रस्तरं चादाय, आहवनीयस्योपरि समीपे एव प्रस्तरं धारयन् समिधा ( समि-

१. स्रुग्भ्य इति बहुवचनं स्रुग्द्वित्वाद्द्वौ विपरिणस्यते ।

२. स चायं मन्त्रोऽपच्छेदे प्रयुज्यते । ततश्च पितृयज्ञे परिशिष्टस्य प्रस्तर- मात्रस्य ग्रहणे निवर्तते ।

३. पितृयज्ञे देवपितृभ्य इति विपरिणामः ।

४. "न ग्रहणाद्यमन्तरणाउपग्रहणेषु तु" ( का० श्रौ० ३।७।९ ) इत्यनेन स्तरणादौ मन्त्रावृत्तिबोधनात् । एवं तृतीयवारमपि मन्त्रेणैव स्तरणम् ।

दाघातेन ) आहवनीयं समर्थं कुर्यात्। तत आहवनीयादुल्मुकद्वयमनुयाजार्थमुद्धृत्य, प्राञ्चं निनीय, स्वग्रान्तयोर्निदध्यात्।

ततः "ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः" ( य० मं० २१३ ) इति मन्त्रेणाहवनीयस्य पश्चादुदगग्रं स्थूलं मध्यमपरिधिं निधाय, "ॐ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः" ( य० मं० २१३) इति मन्त्रेण दक्षिणतः प्रागग्रमणुं द्वितीयं परिधिं निधाय, "ॐमित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः" ( य० मं० २१३ ) इति मन्त्रेणोत्तरतः प्रागग्रम् अणुतरं तृतीयं परिधिं निदध्यात्।

तत आहवनीयसमर्थीकरणार्थम् इध्माद् गृहीतया समिधा प्रथमं परिधिं स्पृष्ट्वा, उत्थाय, ताम् "ॐ वीतिहोत्रं त्वा कवे द्युमन्तः समिधीमहि। अग्ने बृहन्तमध्वरे" ( य० मं० २१४ ) इति मन्त्रेणाहवनीये आदध्यात्। तत इध्मादेव द्वितीयां समिधमादाय परिधिमस्पृष्ट्वैव "ॐसमिदसि" (य० मं० २१५) इति मन्त्रेण तत्रैवादध्यात्। तत उपविश्याहवनीयमीक्षमाणः

१. अग्नेरेव समिधा समर्थीकरणम्, दृष्टार्थत्वात्। अतः अप्सु परिधिरसु च न भवति।

२. अनुयाजाभावेन गृहमेधीयादौ नोल्मुकोद्धरणम्।

३. स्वाशब्दस्य परिधेः कल्प्यतया परिधिरत्वात् अवभृथेष्टौ अग्निस्थानापन्नानामपां बोधनाय युष्मानिति न विपरिणामः।

४. नात्र दक्षिणदिक्स्थत्वाद्दक्षिणत्वम्, किन्तु इ[illegible]रिगतबाहुत्वमौपचारिकम्। तेन पितृयज्ञे पश्चिम इत्येवं न विपरिणामः।

५. पितृयज्ञे पूर्वत इत्येवं विपरिणामः, समवेतार्थत्वात्।

६. उपरपशानस्य परिधिसंस्कारत्वात् अवभृथेऽपि प्रवृत्तिः। अतो समिदाधानस्य तु दृष्टार्थत्वात् न तत्र प्रवृत्तिः।



"ॐ सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै" ( य० मं० २१५ ) इति मन्त्रं सस्वरं जपेत्। ततः प्रादक्षिण्येन वेदिं प्रत्यावृत्यागत्य स्रुतर्बर्हिषोऽन्ये विधृतिसंज्ञके प्रागायामादिते द्वे तृणे साग्रे अरत्निमात्रे आदाय, वेदिमध्ये "ॐ सवितुर्बाहू स्थः" ( य० मं० २१५ ) इति मन्त्रेण उदगग्रे निदध्यात्। ततस्तयोस्तृणयोरुपरि मूलभागे प्रागग्रं प्रस्तरम् "ॐऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः" ( य० मं० २१५ ) इति मन्त्रेण स्तृणीयात्। ततः "ॐआ त्वा वसवो रुद्रा आदित्याः सदन्तु" ( य० मं० २१५ ) इति मन्त्रेणोभाभ्यां हस्ताभ्यां प्रस्तरमभिनिदध्यात् ( अधः पीडयेदित्यर्थः )। ततः अग्नीधा समर्पितां जुहूं दक्षिणेन पाणिना प्रतिगृह्य, सव्यहस्ताधिष्ठिते प्रस्तरे "ॐ घृताच्यसि जुहूर्नाम्ना सेदं प्रियेण धाम्ना प्रियं सद आसीद" ( य० मं० २१६ ) इति मन्त्रेण प्रागग्रां सादयित्वा, ततः सव्येन वेदं गृहीत्वा, अग्नीधा समर्पितामुपभृतं दक्षिणेन पाणिना आदाय, जुहूत्तरतः "ॐघृताच्यस्युपभृन्नाम्ना सेदं प्रियेण धाम्ना प्रियं सद आसीद" ( य० मं० २१६ ) इति मन्त्रेण बर्हिषि सादयित्वा, ततः पूर्ववद् ध्रुवामादाय, उपभृत उत्तरतः विधृत्यग्रयोरुपरि "ॐघृताच्यसि

१. त्वाशब्दोऽग्निपरत्वात् अवभृथेऽपामर्थे 'युष्मानित्येवं' विपरिणम्यते। पुरस्तात्स्थितस्य दक्षिणत इत्येवं पितृयज्ञे।

२. अङ्गप्रधानार्थं जुहूधारणार्थत्वात् पितृयज्ञे 'देवविदृश्य' इति विपरिणामः।

३. गृहमेधीये आज्यहविर्जुह्वामादत्ते [illegible] न [illegible]। [illegible]

[illegible]

ध्रुवा नाम्ना सेदं प्रियेण धाम्ना प्रियः सद आसीद" (य० सं० २।६) इति मन्त्रेण तामासादयेत् ।

( जुहूमासाद्य तया असंस्पृष्टां ततः प दुपभृतम् आसादयेत् । उपभृता असंस्पृष्टाम् उपभृतः पश्चाद् ध्रुवामासादयेत । इदं च सूत्रे अत्रकृष्टग्रहणात् लभ्यते इति बोध्यम् ) ।

जुहूं दक्षिणेन, ध्रुवामुत्तरेण वा स्रुवमासादयेत् ।

अथ दक्षिणेनाज्यस्थालीं स्रुवं चादाय, सव्ये पुरोडाशपात्रीं वेदं च आदाय, प्रदक्षिणमावृत्य, प्रत्यगागत्य, गार्हपत्यस्य पश्चादुपविश्य, गार्हपत्यस्योत्तरत आज्यस्थालीं निधाय, तस्योत्तरतः पुरोडाशपात्र्यौ उदक्संस्थे स्थापयित्वा, वेदेन पुरोडाशाभ्यां भस्म पराकृत्य, स्थाल्याः स्रुवेण आज्यमादाय, प्रथमं पात्र्योः उपस्तीर्य, पश्चात्पुरोडाशयोरभिघारणं कृत्वा तयोः पात्र्योर्निधानं कर्तव्यम् । तत्र प्रथममाग्नेयं पुरोडाशं हस्तेन अस्पृशन् काष्ठाद्युपायेनादाय, उत्तरपुरोडाशस्य पूर्वतो नीत्वा, उदगुद्वास्य, आज्यस्थाल्याः पश्चिमतो नीत्वा, दक्षिणतः स्थापितायां पात्र्यां स्थापयेत् । ततः अग्नीषोमीयं पुरोडाशं (दर्शे ऐन्द्राग्नं) पूर्ववदादाय, उदगुद्वास्य, आज्यस्थाल्याः प्रथमस्य पुरोडाशस्य च पश्चिमतो नीत्वा, तदुत्तरतः स्थापितायां पात्र्यां स्थापयेत् ।

ततः कपालानि गणयित्वा, वेदं सव्यहस्ते आदाय, स्रुवेण आज्यस्थाल्या घृतमादाय "ॐयस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान् सोम घृतवान् हि भूत्वाऽग्निं गच्छ स्वर्यजमानाय विन्द" (का० श्रौ० २।८।१४) इति मन्त्रेण आग्नेयं पुरोडाशम् अक्त्वा, अग्निपदस्थाने 'अग्नीषोमौ' इति संयोज्य, अनेनैव मन्त्रेण अग्नीषोमीयं पुरोडाशम् (दर्शे इन्द्राग्नीपदं संयोज्य ऐन्द्राग्नम्) अञ्ज्यात् ।



ततः स्रुवेण सर्वाणि कपालानि आज्येनोपधानक्रमेण 'प्रथममनज्मि' इत्यादिना प्रयोगेण, "ॐयानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम्" (का० श्रौ० २।८।१६) इति मन्त्रेण वा अञ्ज्यात् । मन्त्रपक्षे प्रतिकपालं मन्त्रावृत्तिः ।

ततः स्फ्यमादाय, 'प्रथममुद्वासयामि' इत्येवम् आग्नेयस्य प्रथमकपालम् उत्तरत उद्वास्य, द्वितीयं तृतीयं चतुर्थं पञ्चमं षष्ठं सप्तमम् अष्टमम् इत्थमेव क्रमेण उद्वास्य, अग्नीषोमीयपुरोडाशस्य प्रथमादीनि अष्टमान्तानि एवमेवोद्वास्य, नवमं दशमम् एकादशभित्येवं त्रीणि उद्वासयेत् । ( दर्शे द्वादशमधिकम् ) । उद्वासयामीति सर्वत्र शेषो बोध्यः ।

ततः सर्वाणि हवींषि वेदिसमीपे नीत्वा वेदोपग्रहेण आज्यस्थालीं ध्रुवाया उत्तरतः "ॐप्रियेण धाम्ना प्रिया सद आसीद" (य० सं० २।६) इति मन्त्रेण बर्हिष्यासाद्य, स्फ्योपग्रहेण तस्या उत्तरतः आग्नेयपुरोडाशम् "ॐप्रियेण" इत्यनेनैव मन्त्रेण बर्हिष्यासाद्य, तदुत्तरतः अग्नीषोमीयपुरोडाशं तेनैव मन्त्रेण बर्हिष्यासादयेत् [ दर्शे ऐन्द्राग्नम् ] ।

ततः वेदं गृहीत्वा "ॐध्रुवा असदन्नृतस्य योनौ ताविष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिम्" (य० सं० २।६) इति मन्त्रेण आज्यस्थाल्यामाज्यमालभ्य, ततः अनेनैव मन्त्रेण जौहवमालभ्य, तत औपभृतं ध्रौवं च पूर्ववदालभेत ।

ततो वेदं ध्रुवायाः पुरस्तान्निधाय, स्फ्योपग्रहेण आग्नेयं पुरोडाशं पूर्वेणैव मन्त्रेण आलभ्य, तेनैवाग्नीषोमीयमालभेत ( दर्शे ऐन्द्राग्नम् ) ।

ततोऽध्वर्युः "ॐपाहि मां यज्ञन्यम्" (य० सं० २।६) इति मन्त्रेणात्मानम् आलभ्य अप उपस्पृशेत् ।

अत्र वा व्रतग्रहणं यजमानस्य । अयं व्रतोपायनस्यान्तिमः कालः ।

अथाध्वर्युः होतुरासनम् उदगग्रदर्भोपस्तृतं गार्हपत्याहवनीययोरन्तराले वेदेः पश्चिमभागे वेदिश्रोणेरुत्तरभागे वा स्थापयित्वा होतारम् 'एहि' इत्यामन्त्रयेत् ।

ततो हौत्रं करिष्यन् आचम्य, प्रणीतोत्करावन्तरेण प्रविश्य, आहवनीयस्य पश्चिमतः प्राङ्मुखः सन् तिष्ठेत् ।

ततः अध्वर्युः इध्मादेकां समिधमादाय "ॐअग्नये समिध्यमानायानुब्रूहि" ( का० श्रौ० ३।१।१ ) इति मन्त्रेण होतारं प्रेषयेत् ।

स च 'ब्रह्मन्सामिधेनीरनुवक्ष्यामि' इति ब्रह्माणमामन्त्रयेत् ।

ब्रह्मा च "ॐप्रजापतेऽनुब्रूहि यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तऋषीणाᳪं सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि" ( का०श्रौ०२।२।११ ) इत्युपांशु पठित्वा "ॐअनुब्रूहि" इत्युच्चैर्होतारं प्रेषयेत् ।

ततो होता अङ्गुलिपर्वाग्रमांससंहितम् अञ्जलिं हृदयदेशे प्रतिष्ठाप्य, दक्षिणं च पादं वेद्याः उत्तरश्रोणिसंलग्नं कृत्वा, द्यावापृथिव्योरन्तरमीक्षमाणः—

"ॐनमः प्रवक्त्रे नम उपवक्त्रे नमो द्रष्ट्रे नमोऽनुख्यात्रे । क इदमनुवक्ष्यति स इदमनुवक्ष्यति क आर्त्विज्यं करिष्यति स आर्त्विज्यं करिष्यत्यृचः प्रपद्ये यजुः प्रपद्ये साम प्रपद्ये ब्रह्म प्रपद्येऽनाप्तां छन्दसां मातरं प्रपद्ये भूः

१. अत्राग्निशब्दो जात्यपेक्षः, जातेः पदार्थत्वात् । ततश्च वरुणप्रघासेषु नाग्निर्द्विवेऽप्यनूहः ।



प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवः स्वः सर्वं प्रपद्ये" इति जपेत् ।

होतृजपान्ते यजमानः स्फ्यं गृहीत्वा "ॐसन्तत्वग्निरिव मेऽनुब्रूहि" ( का० श्रौ० ३।१।६ ) इति होतारं प्रेषयेत् ।

( इतः प्रभृति स्विष्टकृतः प्राग् ऋचः निगदाश्च प्रथमस्वरेण प्रयोज्याः । स्विष्टकृत आरभ्य इडामार्जनान्तं मध्यमस्वरेण प्रयोज्याः । तदुत्तरं समाप्तिपर्यन्तम् उत्तमस्वरेणेति कर्कादयः ) ।

ततो होता उपांशु त्रिर्हिङ्कृत्य महाव्याहृतिप्रणवोच्चारणपूर्वकं "प्रवो वाजा" इत्याद्याः सामिधेनीः प्रथमस्वरेण अनुब्रूयात् । सर्वासामृचां मध्ये प्रणवं प्रयुञ्जीत । इदमेव प्रणवेन ऋचां संधानमुच्यते । प्रणवश्च ऋचष्टेः स्थाने प्रयोज्यः । विश्रामश्च अर्धर्चे कर्तव्यो, न तु ऋक्समाप्तौ ।

होत्रा अनूच्यमानासु सामिधेनीषु यजमानः 'इदमहं पञ्चदशेन वज्रेण भ्रातृव्यमववाधे ( का० श्रौ० ३।१।७ ) इति पादाङ्गुष्ठाभ्यां भूमिमधः पीडयेत् ।

अध्वर्युः स्फ्यमादाय तिष्ठन् सामिधेनीनां प्रणवे प्रणवे एकैकमिध्मकाष्ठमाहवनीयेऽभ्यादध्यात् । "समिध्यमानोऽध्वरे" इति नवम्याः ऋचः (एकादश्याः सामिधेन्याः) अन्ते प्रयुज्यमाने प्रणवे 'समिद्धोऽग्न' इत्यतः प्राग् एकमिध्मकाष्ठम् अनुयाजार्थं परिशिष्य, अवशिष्टानि इध्मकाष्ठानि सहैव प्रक्षिपेत् ।

( अथ सामिधेन्यः कात्यायनहौत्रपरिशिष्टे अध्या० १ क० २ )

हिं ३ हिं ३ हिं ३ भूर्भुवः स्वरोम्—
प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या
देवाञ्जिगाति सुम्नयो३म्—१

१. नैमित्तिकसामिधेनीहौत्रं द्वितीयकाण्डे पञ्चमप्रपाठकपरिशिष्टानुवाकादारभ्य षष्ठप्रपाठकस्य द्वादशानुवाकपर्यन्तं हौत्रमन्त्राः ।

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या—
देवान् जिगाति सुम्नयो३म्–२

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या—
देवान् जिगाति सुम्नयो३म्–३

अग्न आयाहि वीतये गृणानो हव्यदातये।
नि होता सत्सि बर्हिषो३म्–४

तन्त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि।
बृहच्छोचा यविष्ठ्यो३म्–५

स नः पृथु श्रवाय्यमच्छा देव विवाससि।
बृहदग्ने सुवीर्यो३म्–६

---

प्र वो वाजा इति। हे देवाः वः युष्मदीयाः ऋत्विग्यजमानाः प्र = प्रवर्तन्ते। वाजाः गमनशीलाः मासाः, अभिद्यवः–अभितः पूर्वपक्षरूपेण उत्तरपक्षरूपेण च दीप्यमानाः अर्धमासाः, घृताच्या यागसाधनभूतघृतयुक्तया स्रुचा सह हविष्मन्तः हविर्भाजो देवाश्च प्रवर्तन्ताम्। किं च अयं यज्ञः देवान् जिगाति प्राप्नोतु। यजमानस्य सुम्नयुः = सुम्नं सुखमिच्छतीति सुम्नयुः = सुखेच्छुश्च भवतु।

१. अग्न आयाहीति। हे अग्ने! हव्यदातये–यजमानस्य हविर्दानाय, वीतये = देवानां हविर्भक्षणाय गृणानः–'यजमानो देवानां हविर्दास्यतीति भवद्भिर्भक्षणीयम्' इति वदन् आयाहि। आगत्य च होता आह्वाता सन् बर्हिषि यज्ञे निषत्सि निषीद।

२. तन्त्वा समिद्भिरिति। हे अङ्गिरः = हे अग्ने, तं तादृशं देवानामाह्वातारं त्वा त्वां समिद्भिः घृतेन च वर्धयामसि वर्धयामः। हे यविष्ठ्य = युवतम, बृहत् ज्वालाधिक्यं यथा भवति तथा शोचा—शोच = दीप्यस्व।

३. स नः पृथ्विति। हे देव = अग्ने, यः त्वं नः अस्मदर्थं पृथु विस्तीर्णं श्रवाय्यं देवैः श्रोतुं योग्यम् इदं कर्म अच्छा–अच्छ अभिमुखीकृत्य इदं सुवीर्यं च यथा भवति तथा विवाससि–विवासय विभातं कुरु। प्रकाशयेत्यर्थः। विवासयतेः प्रकाशनार्थत्वात्। छान्दसत्वेन णिच आर्धधातुकत्वाभावाल्लोपे नेट्त्वाभावे च 'विवाससि' इति लोट्मध्यमस्य रूपम्। इदं च कर्मैव ज्वालाधिक्यं विवक्षितम्। सुवीर्यसमृद्धेन हूयमानस्य हविषः सम्यग्दहनमात्मसमर्पणं उच्यते।



ईडेन्यो नमस्यस्तिरस्तमांसि दर्शतः।
समग्निरिध्यते वृषो३म्–७

वृषो अग्निः समिध्यतेऽश्वो न देववाहनः।
तँ हविष्मन्त ईडतो३म्–८

वृषणं त्वा वयं वृषन् वृषणः समिधीमहि।
अग्ने दीद्यतं बृहो३म्–९

अग्निन्दूतं वृणीमहे होतारं विश्ववेदसम्।
अस्य यज्ञस्य सुक्रतो३म्–१०

समिध्यमानो अध्वरेऽग्निः पावक ईड्यः।
शोचिष्केशस्तमोमहो३म्–११ ॐ

---

१. ईडेन्य इति। ईडेन्यः (कृत्यार्थे केन्यप्रत्ययः) स्तोतुं योग्यः, नमस्यः नमस्कारयोग्यः, तमांसि तिरः–तिरस्कुर्वन्, दर्शतः पदार्थानामादर्शयिता, वृषा कामानां वर्षयिता अयमग्निः समिध्यते सम्यग् दीप्यते।

२. वृषो अग्निरिति। वृषः कामानां वर्षयिता, अश्वो न–अश्व इव ('न' इवार्थे 'न' शब्दः) देववाहनः देवार्थस्य हविषो वोढा अयमग्निः समिध्यते। तमिमम् अग्निं हविष्मन्तो यजमानाः ईडते स्तुवन्ति।

३. वृषणं त्वेति। हे वृषन् कामानां वर्षक अग्ने, वृषणं कामानां वर्षयितारं बृहत् दीद्यतं प्रौढज्वालं यथा भवति तथा दीप्यमानं त्वां, वृषणः आहुतिवृष्टिं कुर्वन्तः वयं समिधीमहि सम्यक् प्रकाशयामः।

४. अग्निं दूतमिति। वयं दूतं देवान् प्रति प्रेषणार्हं होतारम् आह्वातारं विश्ववेदसं विद्वान् सर्वान् देवान् वेत्तीति विश्ववेदाः तादृशम्। अस्य यज्ञस्य सम्बन्धिनं सुक्रतुं शोभनकर्माणम् इमम् अग्निं वृणीमहे प्रार्थयामहे।

५. समिध्यमान इति। योऽग्निः, अध्वरे अस्मिन् कर्मणि समिध्यमानः पावकः शुद्धिहेतुः ईड्यः स्तुत्यः, शोचिष्केशः शोचींषि दीप्तयः केशाः केशस्थानीया यस्यासौ शोचिष्केशः तं अग्निम् ईमहे प्रार्थयामः।

• पूर्वमिध्मकाष्ठमनुयाजार्थं परिशिष्य अवशिष्टानि सर्वाणि इध्मकाष्ठान्यप्युपरिष्टाद्वाग्यमाद्यग्नौ प्रक्षिपेत्।

सँमिद्धोऽअग्न आहुत देवान् यक्षि स्वध्वर ।
त्वꣳ हि हव्यवाडसो३म्–१२
आजुहोता दुवस्यताग्निं प्रयत्यध्वरे—
वृणीध्वꣳ हव्यवाहनो३म्–१३
आजुहोता दुवस्यताग्निं प्रयत्यध्वरे—
वृणीध्वꣳ हव्यवाहनो३म्–१४
आजुहोता दुवस्यताग्निं प्रयत्यध्वरे–
वृणीध्वꣳ हव्यवाहनो३म्–१५

इति होता सामिधेनीरनूच्य[3] "अग्ने महाँ२ँ॥ असि ब्राह्मण भारत" इति मंत्रं पठेत् । आजुहोतेत्यादिकामन्त्यां प्र वो वाजा इत्यादिकामाद्यां च ऋचं त्रिवारमनवानन् अनुब्रूयात् । 'अनवानन्' अनुच्छ्वसन् इत्यर्थः । अशक्तौ तु प्रथमयोर्द्वयोगवृच्योः ऋगन्ते ऋगन्तेऽपि विरमेत् ।

ततोऽध्वर्युः उत्तरत उपविश्य, दक्षिणं जान्वाच्य, होत्रा 'अग्ने महाँ२ँ॥ असि ब्राह्मण भारत' ( का० श्रौ० प०

१. समिद्धो अग्न इति । हे आहुत आहुत्याराधित अग्ने, त्वं समिद्धः सन् देवान् यक्षि यजसि । हे स्वध्वर सुष्ठुनिष्पादितयाग, हि यस्मात् त्वं हव्यवाडसि तस्माद्यज ।

२. आजुहोतेति । हे यजमानाः, इममग्निम् आहुतिभिः आजुहोत—आजुहुत प्रीणयत, दुवस्यत परिचरत । प्रयति = प्रयत्नेन वर्तमाने अस्मिन् अध्वरे यागे हव्यवाहनम् अग्निं वृणीध्वं प्रार्थयध्वम् । इयं ऋक् परिधानीया, अनया सामिधेनीनां परिसमाप्यमानत्वात् ।

( प्रवरमन्त्रार्थः )

३. अग्ने महाँ असीति । अग्निरिति यत् एष तस्मात्सर्वाहुत्याधारत्वेन महान् तस्मान्मन्त्रे महानसीत्युच्यते । यस्माद् ब्राह्मणवर्गाभिमानी तस्माद् ब्राह्मणेति सम्बोध्यते । यस्माद्देव देवेभ्यो हव्यं भरति धारयति तस्माद्भारतेति संबोध्यते ।



१२ ) इत्युपक्रान्ते वेदेनाहवनीयं त्रिरुपवाज्य[1] (चालयित्वा), वेदोपग्रहः स्रुवेण आज्यं गृहीत्वा, उत्तरं परिधिसंधिम् अन्ववहृत्य, प्रजापतिं मनसा ध्यायन् अग्नेरुत्तरप्रदेशे ऋजुं दीर्घं संततं प्राञ्चं पूर्वम् आघारं ( आघारसंज्ञकं कर्म ) कुर्यात्[2] ।

अध्वर्यौ अग्नौ द्रव्यं प्रक्षिपति प्रक्षेपादव्यवहितप्राग्वा यजमानः 'ॐ इदं प्रजापतये न मम' इति त्यागात्मकं यागं कुर्यात् । तत्र 'प्रजापतये' इत्यंशं मनसैवोच्चारयेत् ।

ततोऽध्वर्युः अग्नीधे स्फ्यम् इध्मसन्नहनं च समर्पयन् "ॐ अग्निमग्नीत् सम्मृड्ढि" ( का० श्रौ० ३।१।१२ ) इति तं प्रेषयेत् ।

ततोऽग्नीत् स्फ्यं सव्ये गृहीत्वा अग्निं प्रदक्षिणीकृत्य दक्षिणपरिधिसन्निधौ स्थित्वा इध्मसन्नहनैर्दक्षिणपरिधिसमीपपार्श्वेऽग्निं प्राक्संस्थम् "ॐ अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितꣳ सम्मार्ज्मि" (य० सं० २।७) इति मन्त्रेण सकृन् संमार्ज्य, द्विस्तूष्णीं तथैव संमार्जयेत् । तत्रैवावस्थितो मध्यमपरिधिसन्निहितपार्श्वे अग्निम् उदक्संस्थम् "ॐ अग्ने वाजजिदिति" पूर्वोक्तमन्त्रेण सकृत् संमार्ज्य, द्विस्तूष्णीं तथैव संमार्जयेत । ततो दक्षिणपार्श्वादुत्तरपार्श्वं गत्वा, उत्तरपरिधिसन्निहितपार्श्वेऽग्निं पूर्ववन्मन्त्रेण सकृत् प्राक्संस्थं संमार्ज्य, द्विस्तूष्णीं तथैव संमार्जयेत् । ततस्तत्रैवावस्थितोऽग्निमध्ये प्राक्संस्थं तूष्णीं त्रिः संमृज्यात् ।

१. वेदेन त्रिरुपवाजनमाहवनीयस्य संस्कारार्थम् । वेदकरणकत्रिरुपवाजने [illegible] [illegible] [illegible] । अतः [illegible] भवति । संस्कारत्वाच्च [illegible] यावद्गुणे प्रवर्तते एव ।

२. [illegible] यावद्गुणे न भवति । परिभाषितोऽपि [illegible] "न स्वाहा" इति निषेधात् ।

वस्तुतस्तु अग्नीत् स्फ्यं सव्ये गृहीत्वा, उत्तरपार्श्वाद्दक्षिणपार्श्वं गत्वा, दक्षिणपरिधिसन्निधौ अग्निं पूर्वोक्तरीत्या संमृज्य, दक्षिणत उत्तरपार्श्वं गत्वा, मध्यमपरिधिसन्निधावग्निं तथैव संमृज्य, पुनः प्रदक्षिणं परिक्रम्य उत्तरपार्श्वे स्थित्वा, उत्तरपरिधिसन्निधावग्निं तथैव संमृज्य, पुनरप्रादक्षिण्येन परिक्रम्य उत्तरतः स्थित्वा, मध्ये तूष्णीं त्रिः संमार्गं तथैव कुर्यात्। कर्काचार्यस्वरसस्यात्रैव सत्त्वादिति बोध्यम्[1]।

ततोऽध्वर्युः जुहूपभृतोः पुरस्तादाहवनीयमपरेण भूमौ पुटाञ्जलिम् "ॐ नमो देवेभ्यः" ( य० सं० २।७ ) इति मन्त्रेण निदधाति। ततस्तदञ्जलिकरणस्थानाद्दक्षिणस्यां दिशि "ॐ स्वधा पितृभ्यः" ( य० सं० २।७ ) इति मन्त्रेण उत्तानमञ्जलिं सव्येनैव[2] प्राङ्मुख एव करोति। ततोऽप उपस्पृश्य, उभाभ्यां पाणिभ्यां जुहूमादाय, उपभृतोऽग्रस्य उपरिमार्गेण आनीय, उपभृत उपरि निधाय "ॐ सुयमे मे भूयास्तमस्कन्नमद्य देवेभ्य आज्यं संभ्रियासम्" ( य० सं० २।७–८ ) इति[3] मन्त्रेण जुहूपभृतौ सहैवादाय, उत्थाय "ॐ अङ्घ्रिणा विष्णो मा त्वाऽवक्रमिषम्" (य० सं० २।८) इति मन्त्रेण

1. "तूष्णीमुपरि" ( का० श्रौ० ३।१।१४ ) इति सूत्रे "परिक्रामम्" इति णमुल्वचनानुवृत्तिसामर्थ्यात् परिक्रम्येत्यत्रापि भवति" इति कर्कोक्त्या त्रिवारं परिक्रमणं बोध्यते।

२. पित्र्यत्वादेव प्राक्स्थ अपामुपस्पर्शनस्य विधानमपसव्यादिनिवृत्त्यर्थम्। तेन पित्र्याञ्जलिकरणं सव्यादिनैव भवति। अञ्जलिकरणोभयमुत्तराघारार्थम्। तेन तदभावे न भवति।

३. "सुयमे मे" इति मन्त्रेण स्रुगादानम् उत्तराघाराद्यान्तरप्रकरणात्पूर्वमेव। एवम् "अङ्घ्रिणा विष्णो" इति मन्त्रेण दक्षिणातिक्रमणं "वसुमतीम्" इत्यनेनावस्थानं च उत्तराघारार्थमेव, तदीयाद्यान्तरप्रकरणात्। अतश्च अन्यकर्मणि स्रुगादानं, दक्षिणातिक्रमणम्, अवस्थानं च अमन्त्रमेव भवति इति बोध्यम्।



वेद्युत्तरभागात् यजतिदेशं यास्यन् सव्यं पादं पूर्वं चालयन् दक्षिणां गच्छेत्। गत्वा च वेदेर्दक्षिणभागे "ॐ वसुमतीमग्ने ते च्छायामुपस्थेषं विष्णो स्थानमसि" ( य० सं० २।८ ) इति मन्त्रेण ईशानाभिमुखोऽवतिष्ठेत।

( सर्वत्रैव यजतिदेशं गमिष्यतः अध्वर्योः परिधीन् अपरेण स्रुचां पूर्वेण गमनागमनमार्गो ज्ञातव्यः )।

जुहूमुपभृतोऽग्रस्य उपरिमार्गेण प्राचीमेवावतार्य, दक्षिणपरिधिसन्निधावन्ववहृत्य "ॐ इत इन्द्रो व्वीर्यमकृणोदूर्ध्वोऽध्वर आस्थात्। अग्ने व्वेर्होत्रं व्वेर्दूत्यमवतां त्वां द्यावापृथिवी अव त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषाऽभूत्स्वाहा" ( य० सं० २।८–९ ) इति मन्त्रेण आग्नेयकोणे ऋजुं दीर्घं सन्ततं प्राक्संस्थम् उत्तराघारं तिष्ठन्नेव प्रयाजार्थद्रव्यचतुर्थांशेन[1] जुहुयात्।

तदैव "ॐ इदम् इन्द्राय न मम" इति यजमानस्त्यागं कुर्यात्।

ततः अध्वर्युः स्रुचोः परस्परं स्पर्शमकुर्वन्नेव दक्षिणं पादं पूर्वं चालयन् यजतिदेशात्प्रत्यागत्य जुहूस्थेनाज्येन ध्रुवास्थमाज्यं "ॐ सं ज्योतिषा ज्योतिः" इति मन्त्रेण ( य० सं० २।९) जुह्वैव समञ्ज्यात्[2]। ( ध्रौवाज्यमध्ये जुह्वाज्यबिन्दुं पातयेदित्यर्थः )।

तत उपभृतं सव्ये धारयन्नेव दक्षिणेन जुहूं प्रस्तरस्योपरि निधाय, वेदं सव्ये गृहीत्वा, उपभृतं जुह्वा उत्तरतः स्वस्थाने

१. प्रयाजद्रव्याभावे दर्विहोमेषु तु स्थाल्याज्यादेव क्रियते, अवश्यकर्तव्यत्वात्। अयमपि पदार्थत्वाद् यावदुक्ते न भवति।

२. स चायं ध्रुवासंस्कार उत्तराघारे सकृदेव प्रवर्तते। "शिरो वै यज्ञस्योत्तराघार आत्मा वै ध्रुवा तस्मादाज्यमन्वेवैतद्यज्ञस्य शिरः प्रतिदधाति" इति श्रुतेः।

निदध्यात् । ततः होतारं दक्षिणं कुर्वन् उत्करपश्चाद्भागे प्राङ्मुखः स्थितोऽध्वर्युः इध्मसन्नहनान्यादाय 'ओ३श्रा३वय' इति ब्रूयात् ।

ततोऽग्नीत् दक्षिणामुखः अध्वर्योरुत्तरतः स्थितः स्फ्यमन्नहने पाणौ गृहीत्वैव 'अस्तु श्रौ३षट्' इति प्रत्यब्रूयात् ।

होता च सामिधेन्यनुवचनानन्तरं यजमानस्य आर्षेयाणि 'काश्यपावत्सार नैध्रुव' इति वृत्वा—

"ॐ देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसꣳशितो घृताहवनः प्रणीर्यज्ञानाꣳ रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाडास्पात्रं जुहूर्देवानां चमसो देवपानोऽराँ इवाग्ने नेमिर्देवाँस्त्वं परिभूरस्यावह

---

१. काश्यपेत्यादीनि वरणपदानि संबुद्ध्यन्तानि आहवनीयसंबोधनार्थानि । आहवनीयाग्नेर्यजमानोत्पादितत्वेन यजमानद्वारा तत्तद्व्यपदेशत्वेन संबोधनोपपत्तेः । "अग्ने महाँ असि" इति पूर्वत्र "देवेद्धो मन्विद्ध" इत्युत्तरत्र च आहवनीयाग्नेरेव प्रस्तूयमानत्वेन मध्येऽपि तस्यैव संबोधनत्वस्योचितत्वात् । स्पष्टं चेदं धीरमिश्रोदयस्य संस्कारप्रकाशे इति तत एवाधिकं बोद्धव्यम् ।

२. 'देवेद्ध' इत्यादीनां निवित्पदानामर्थः ।

यस्माद्देवाः स्वकीयेषु यागेषु एतम् अग्निमैन्धत प्रज्वलितवन्तः तस्माद्देवेद्ध इत्युच्यते । देवैः इन्धनादूर्ध्वं मनुः स्वकीययागे एतमग्निमैन्धत प्रज्वलितवान् तस्मान्मन्विद्ध इत्युच्यते । ऋषिभिः स्तुतत्वात् ऋषिष्टुत इत्युच्यते । विप्रैः श्रुताध्ययनसंपन्नैः अनुमदितः स्तोत्रितः तस्माद्विप्रानुमदितः । कविभिः वेदार्थतत्त्वप्रकृष्टदर्शिभिः स्तुतत्वात् कविशस्तः । ब्रह्मणा मन्त्रेण संस्कृतत्वात् ब्रह्मसंशितः । घृतरूपाहुतिमत्त्वात् घृताहवनः । यज्ञानां प्रणीः नायकः । देवानां हविर्वहनाय अध्वराणां सम्बन्धी रथः अयमग्निः । यस्माद्राक्षसादयः एनमग्निं केऽपि देवो न तरति नातिक्रामति, तस्मादयम् अतूर्तो होता इत्युच्यते । यस्मात्सर्वमपि दैवम् अयं हविर्वहनात्तरति प्राप्नोति तस्मात्तूर्णिर्हव्यवाट् । अयमग्निः देवानां जुहूः जुहूस्थानीयः जुह्वामिव अस्मिन् हविःप्रक्षेपात्, किं च आस्पात्रम् आस्यपात्रमिव स्थम् । देवानां चमसः पात्रं पानसाधनचमसस्थानीयत्वात् । हे अग्ने, त्वं यथा शकटचक्रस्थितान् तिर्यक् कीलरूपान् अरान् नेमिः परितो व्याप्नोति तथा देवान् परिभूः परितो व्याप्तवानसि । यजमानाय देवानावह ।



देवान्यजमानाय" (का० हौ० प० १।३) इति पञ्चदश निविदः सम्पादयन्, सन्ततं वाऽनुब्रूयात् ।

"पञ्चदश निविदः सम्पादयन्" इति सूत्रे 'अनुब्रूयात्' इति शेषः इति कर्कोक्त्या संततपक्षापेक्षया पञ्चदशनिवित्संपादनपक्षस्य पार्थक्यसूचनात् । तेनास्मिन्पक्षे विभागो लभ्यते ।

ततः यथादैवतम्—

"अग्निमग्नआ३वह सोममा३वह अग्निमा३वह (उपांशु) अग्नीषोमावा३वह (उच्चैः) अग्नीषोमावा३वह देवाँ२॥ आज्यपाँ२॥ आ३वह अग्निꣳ होत्राया३वह स्वं महिमानमा३वह आ च वह जातवेदः। सुयजा च यज" (का० हौ० प० १।३) इत्यनूच्य अध्वर्युकर्तृकं स्ववरणम् आकाङ्क्षन् अवतिष्ठेत ।

अध्वर्युणा 'ॐ अग्निर्देवो दैव्यो होता देवान्य-

---

१. दर्शेष्टौ 'विष्णुमा३वह' इति देवतापदमुपांशु उक्त्वा उच्चैः 'इन्द्राग्नी आ३वह' इत्यादि वाच्यम् । एवं यजमानः त्यागवाक्ये 'विष्णवे' इत्युपांशु उक्त्वा 'इन्द्राग्निभ्याम्' इत्याद्युच्चैर्वदेत् ।

शतपथब्राह्मणप्रथमकाण्डपञ्चमाध्यायप्रथमब्राह्मणम् ।

२. अध्वर्युकर्तृकं होतृवरणम् ।

अग्निर्देव इति । अग्निः तन्नामकः देवः, दैव्यः देवानां होता, देवान् विद्वान् देवस्वरूपज्ञानवान्, चिकित्वान् तद्विषयकस्मृतिमान् , यक्षत् = यजतु । मनुष्वत् मनुना तुल्यं, भरतवत् भरतेन तुल्यम् । यथा मनुः भरतो वा पुरा अयजत तथैव यजतु इत्यर्थः । आर्षेयमुक्त्वा अध्वर्युः ब्रह्मण्वत् इत्यादिमन्त्रं पठति । ब्रह्मण्वत् ब्रह्म अग्निः स यथा आवहति तद्वत् आ च वक्षत् आवहतु च । भरतवत् ... वत् इति अग्निप्रशंसोपायेन "अग्निर्देवो दैव्यो होता" इत्यत्र मानुषस्यैव होतुः स्तुतये अग्निदेवत्वारोपः । न तु प्रधानाग्नेः निरूढत्वं तत्रोपादानम् । यष्टुः अग्नेरग्निसाहाय्यासंभवात् । ततश्च सौर्यादौ अवभृथेष्टौ च अविकृतत्वमेवास्य पाठः । ब्रह्मण्वत् इत्यादिषु च ब्रह्मपादैः मन्त्रस्य एव ... बोध्यः । ब्राह्मणाः अस्य यज्ञस्य प्रावितारः रक्षितारः ।

क्षद्विद्वाँश्चिकित्वान् मनुष्वद् भरतवत्' ( का० श्रौ० ३।२।७ ) इत्युक्त्वा यजमानस्य प्रवरनामधेयानि 'कश्यपवत् अवत्सारवत् निध्रुववत्' ( का० श्रौ० ३।२।८ ) इत्येवमुच्चार्य "ब्रह्मण्वदाच वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारो जगन्नाथशर्मा होता मानुषः" ( का० श्रौ० ३।१।१३ ) इत्युच्यमानं स्ववरणं श्रुत्वा—

होता[2] "ॐ एतत् त्वा देव सवितर्वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेणाग्ने पूषन् बृहस्पते प्र च वद प्र च यज वसूनाँ रातौ स्याम रुद्राणामुर्व्यां स्वादित्या ऽअदितये स्यामानेहसो जुष्टामद्य देवेभ्यो वाचमुद्यासं जुष्टां ब्रह्मभ्यो जुष्टां नराशँसाय यद्य होतृवर्ये जिह्मं चक्षुः परापतत्। अग्निष्टत् पुनराभ्रियाः जातवेदा विचर्षणिः" ( का० हौ० प० ११४ ) इति उपांशु पठित्वा "[1]ॐ षण्मोर्वीरँहसस्पान्त्वग्निश्च पृथिवी चापश्च वातश्चाहश्च रात्रिश्चेत्येता मा देवता ऽआर्तेर्गोपायन्तु" (का० हौ० प० ११४ ) इत्यात्मानमालभ्य उदकमुपस्पृश्य [2]"ॐ इन्द्रमन्वारभामहे होतृवर्ये पुरोहितम्। येनायन्नुत्तमँ स्वर्देवा ऽअङ्गिरसो दिवम्" (का०हौ०प० ११४) इति उपांशु पठित्वा पुरः स्थितस्याध्वर्योः तत्पुरतः स्थितस्याग्नीध्रश्च दक्षिणयोरंसयोः प्रादेशेन संमृशेत् ।

ततस्तौ होत्रा संमृष्टौ सन्नावुपविशतः । वरणानन्तरमेतावत्कालपर्यन्तं तौ तिष्ठतामेव ।

ततो होता इध्मसन्नहनान्यादाय तैः—"ॐ[3] संमार्गोऽसि सं मा प्रजया पशुभिर्ब्रह्मवर्चसेन च मृड्ढि" (का०हौ०प०

---

१. नामग्रहणमुपांशु कर्तव्यम् ।

२. एतत्त्वा देवसवितरिति वृतजपः । अतः पितृयज्ञे "न होतारं वृणीते" इति निषेधाद्वरणाभावेन न प्रवर्तते । हे सवितः सकलकर्मानुज्ञातः देव, एतत् एतेन मम वरणेन मद्याजेन त्वा त्वामेव वृणते अध्वर्यवः । होतुः कर्म हौत्रं स्वस्वमन्त्रपाठादि । तद् हौत्रं कर्तुम् अग्निं वृणते न तु मामित्यर्थः । विश्वे च ते नराश्च विश्वनराः, तेषां सम्बन्धी वैश्वानरः । स च पालनात् पिता उच्यते । वैश्वानरेण पित्रा सह अग्निं वृणते इति पूर्वेण संबन्धः । वैश्वानरात्मकं देवम् अग्निं च वृणते । होता हि अनुवाक्याः पठिष्यन् याज्याभिर्यक्ष्यंश्च भवति । तदेतदनुवचनं यजनं च अस्यैव ( होतुरेव ) एताभ्यः अग्निपूषबृहस्पतिदेवताभ्यः निह्नवाय भवति । 'प्र च वद' 'प्र च यजेति' प्रवचनयजनयोः स्वकर्तृकयोरेव निह्नवाय अग्न्यादिदेवेषु आरोपः होत्रा क्रियते । वसूनां रातौ दाने भवेम । धनं लभेमहीत्यर्थः । रुद्राणाम् उर्व्यायाम् उरुत्वे महत्त्वे स्याम । रुद्रप्रतिष्ठां लभेमहीत्यर्थः । स्वादित्याः सुप्रीता आदित्याः स्वादित्याः । सुप्रीतत्वं च तेषाम् उपमदनेनैव । तादृशा आदित्या वयम् अदितये देवमात्रे अनेहसः अपापिनः अनपराधिनो भवेम । अथवा दितेः खण्डनस्य नाशस्य अभावाय, चिरकालजीवनाय भवेमेत्यर्थः ।

अद्य देवेभ्यः जुष्टां जुष्टं प्रीतं यथा स्यात्तथा वाचम् उद्यासम् उच्चारयेयम् । ब्रह्मभ्यः ब्राह्मणेभ्यः जुष्टां जुष्टं, वाचम् उद्यासमिति पूर्वेण संबन्धः । नराशंसाय नराणामर्थेषां मनुष्याणाम् आ सर्वतः शंसनाय जुष्टां प्रियां, वाचमुद्यासमिति पूर्वेण संबन्धः । होतृवर्ये होतृवरणे निमित्तभूते सति यच्चक्षुः अङ्गं जिह्मम् अंशोपरोधेन कुटिलं परापतत् सन्निपतेत् तत् विचर्षणिः विशेषेण द्रष्टा जातवेदा अग्निः पुनराभ्रियात् आभरतु । अपूर्वं प्रभावं यत् होतृत्वं सम्यग्भवतु तदग्निः समापयतु इति तात्पर्यार्थः । इति वृतस्य होतुर्जपः ।

१. षण्मोर्वीरिति उर्वीः—उर्व्यः महत्यः, अग्निः पृथ्वी आपः वातः अहः रात्रिश्च इत्येताः षड् देवताः मा माम् अंहसः दुरितात् पान्तु रक्षन्तु । वरणाभावेऽपि संस्कारार्थमात्मालम्भो भवत्येव ।

२. इन्द्रमन्वारभामह इति । होतृवर्ये होतृवरणे, इन्द्रम्—ऐश्वर्यवन्तमग्निं पुरः अग्रतः, सर्वदेवैः कार्यसाधनत्वेन हेतुना, हितं निहितं ... अन्वारभामहे अन्वारब्धाः । निर्विघ्नकर्मारम्भं ज्ञात्वा सभिना इत्यर्थः । येन अग्निना अङ्गिरसेन देवा आदित्याः पूर्वं यज्ञसनाः उत्तमं स्वः उत्कृष्टमादित्यम् आयन् प्राप्ताः, अङ्गिरसश्च दिवं स्वर्लोकं प्राप्ता इत्यर्थः ।

३. संमार्गोऽसीति । हे दर्भतृणाधिष्ठातृदेव, त्वं संमार्गोऽसि संशोधकोऽसि, अतः मां प्रजया पशुभिश्च संमृड्ढि संशुद्धतया संयोजय । धर्मार्थाः प्रजाः यज्ञार्थाः पशवश्च संपद्यन्तामित्यर्थः ।

१४ ) इति उपांशु पठितेन मन्त्रेण मुखं सकृत् प्रदक्षिणं संमृज्य, द्विस्तथैव तूष्णीं संमृज्य "ॐ अपमार्गोऽस्यप मा पाप्मना पापेन च मृड्ढि" ( का० हौ० प० १४ ) इत्यनेन मन्त्रेण सकृत् अप्रदक्षिणं तथैव मुखमपमृज्य, द्विस्तथैव तूष्णीमपमृज्य, अथ उपस्पृश्य "ॐ ऐन्द्रीमावृतमन्वावर्तते" ( का० हौ० प० १४ ) इति प्रदक्षिणमावृत्य होतृषदनात्तृणम् अङ्गुष्ठोपकनिष्ठिकाभ्यामादाय "ॐ निरस्तः परावसुः सह तेन यं द्विष्मः" ( का० हौ० प० १४ ) इति मन्त्रेण नैर्ऋत्यां दिशि निरस्य, अथ उपस्पृश्य, "ॐ इदमहमर्वावसोः सदने सीदामि" (का०हौ०प०१४) इति मन्त्रेण पूर्वास्तीर्णे होतृषदने उपविश्य "ॐ विश्वकर्मँस्तनूपा असि मा मोदोषिष्टं मा माहिंसिष्टमेष वां लोकः" ( का० हौ० प० १४ ) इति उपांशु पठन् किञ्चिदुत्तरतश्चलेत् ।

अथ अग्निमीक्षमाणः "ॐ विश्वे देवाः शास्तन मा

१. अपमार्गोऽसीति । हे दर्भाधिष्ठानः, त्वम् अपमार्गोऽसि, अतः मा माम् पाप्मना पापकर्मणा पापेन तत्फलेन कष्टेन च अपमृड्ढि वियोजयेत्यर्थः ।

२. ऐन्द्रीमावृतमिति । ऐन्द्रीं पूर्वां दिशमनुलक्ष्य, आवृतमावर्तनं, परिक्रमणं करोतीत्यर्थः ।

३. परावसुर्नाम असुराणां होता सः निरस्तः ।

इदमिति अहम् अर्वावसोः होतुः सदने आसने सीदामि उपविशामीत्यर्थः ।

४. उपविष्टस्य होतुर्जपः विश्वकर्मन् इति । हे विश्वकर्मन् कृत्स्नविश्वव्यापारस्य कर्तः, त्वं तनूपाः तनोः पाता असि । मा मोदोषिष्टमिति । हे उभावग्नी, युवां मा मां, उत आविश्यैव मोदोषिष्टं दाहं माकार्ष्टम्, मा च हिंसिष्टम् । यतः एषः लोकः वां युवयोः स्थानम् अतो हेतोर्मां मा हिंसिष्टमिति प्रार्थना कृता ।

५. अग्निमीक्षमाणस्य जपः विश्वेदेवा इति । हे विश्वेदेवाः, इह यज्ञे वृतः होतृस्थानेऽहं निषद्य उपविश्य स्तोतव्यं, यत् तत् यथा—येन प्रकारेण मनवै जानीयां, तथा शास्तन शिष्ट । मध्यमबहुवचनस्य तनबादेशो विध्वाद् इत्यत्र न । किं च यथा येन प्रकारेण वः युष्माकं भागः कल्पितः तं भागं मे मह्यं प्रब्रू-



यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि" ( का० हौ० प० १४ ) इति उपांशु पठित्वा "ॐ अग्निर्होता वेत्त्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु ते यजमान देवता" इत्युच्चैः पठित्वा, ततः "ॐ योऽग्निं होतारमवृथाः" इति उपांशु पठित्वा, पुनरुच्चैः "ॐ घृतवतीमध्वर्यो स्रुचमास्यस्व देवयुवं विश्ववारामीडामहै देवाँ ईडेन्यान् नमस्याम नमस्यान्यजाम यज्ञियान्" ( का० हौ० प० १४ ) इति स्रुगादापनं पठेत् ।

'अग्निर्होता वेत्तु' इति स्रुगादापनं पठति होतरि अध्वर्युः उभाभ्यां पाणिभ्यां जुहूमादाय, उपभृतोऽग्रस्य उपरि निधाय, 'घृतवतीम्' इति शब्दे होत्रा उक्ते जुहूपभृतावादाय, हवींष्युत्तरेण परिधीनपरेण सव्येन पादेन वेदेर्दक्षिणभागं गत्वा ईशाना-

प्रकर्षेण कथयत । येन च पथा मार्गेण वः युष्माकं हव्यं हविर्द्रव्यम् आवहानि समन्तात् प्रापयाणि तं मार्गं च कथयत । स्तवनप्रकारं हविराहरणप्रकारं परिवेषणप्रकारं च कथयतेत्यर्थः ।

१. अग्निर्होता वेत्त्वग्नेरिति । अयमग्निः होता होमस्य कर्ता अतः अयमग्निः वेत्तु होमकर्म जानातु । प्रकृष्टम् अवित्रं फलदानरूपम् अस्मद्रक्षणं यस्मिन्होमानुष्ठाने तत्प्रावित्रं होत्रं होमानुष्ठानं, वेत्तु जानातु । हे यजमान, ते तव हविःस्वीकर्त्री देवता साधु फलं, ददात्विति शेषः ।

हे अध्वर्यो, घृतवतीं घृतपूर्णां, स्रुचं जुहूम्, आऽस्यस्व आक्षिप ( आङ्पूर्वादस्यतेः "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" इत्यात्मनेपदम् ) स्वीकुरु । स्रुचं विशिनष्टि देवयुवम्—देवान् यौति मिश्रयतीति देवयुः तादृशीं, विश्ववाराम्—विश्वान् राक्षसकृतान् विघ्नान् वारयतीति विश्ववारा तादृशीम् । ईडेन्यान् स्तुतिप्रियान् देवान्, मनुष्यान्, वयं ईडामहे स्तुमः । नमस्यान् नमस्कारप्रियान् पितॄन्, नमस्याम नमस्कुर्मः । यज्ञियान् यज्ञप्रियान् देवान्, यजामः । "अग्निर्होता वेत्तु" इत्यादि "यजाम यज्ञियान्" इत्यन्तः स्रुगादापनमन्त्रः प्रयाजार्थं स्रुगादानप्रेरणार्थमेव होत्रा पठ्यते । प्रयाजावान्तरप्रकरणादिति बोध्यम् ।

मिमुखोऽवस्थाय, 'ओ३श्रा३वय' इति अग्नीधं प्रेष्य, 'अस्तु श्रौ३षट्' इति तेनोक्ते, "ॐ समिधो यज" इति होतारं प्रेषयेत्। आश्रावणकाले च अध्वर्युः स्वनाभिसमीपे स्रुचो-र्धारणं कुर्यात्। ततो जुहूं प्राचीमवतार्य "ॐ ये३ यजामहे [1]समिधः समिधो अग्न आज्यस्य व्यन्तु३ वौ३षट्" ( का० हौ० प०-१।४ ) इति होत्रा वषट्कारे कृते सति समिद्धतमे वह्नेः प्रदेशे जुहूस्थाज्यतृतीयांशं प्रक्षिपेत्।

यजमानश्च "ॐ इदꣳ समिद्भ्यो न मम" इति त्यागं कृत्वा "एको ममैका तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः त्विषिमान् भूयासम्" ( का० श्रौ० ३।३।२-५ ) इति वदेत्। 'द्विष्मः त्विषिमान्' इत्यत्र अनुमन्त्रणभेदात्त मन्त्रिः।

ततोऽध्वर्युः पुनराश्राव्य "अस्तु श्रौ३षट्" इति अग्नीधा उक्ते यजेति होतारं प्रेष्यति।

ततो होता "ॐ ये३ यजामहे [2]तनूनपादग्न आज्यस्य वेतु३ वौ३षट्" ( का०हौ०प० १।४ ) इति पठेत्।

अध्वर्युः जुहूं प्राचीमवतार्य वषट्कारान्ते समिद्धतमे वह्नेः प्रदेशे अवशिष्टाज्यद्वितीयांशं जुहुयात्।

यजमानश्च ॐ इदं तनूनपाते न मम" इति त्यागं विधाय "द्वौ मम द्वे तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः अपचितिमान् भूयासम" इति वदेत्।

वसिष्ठशुनकात्रिवध्र्यश्वकण्वकश्यपसंकृतिराजन्यवैश्यप्रजापशु-कामानां तनूनपात्स्थाने नराशꣳसप्रयाजो ज्ञेयः।

---

१. प्रयाजमन्त्रार्थः। हे अग्ने, समिधः समिधः सर्वाः समिध्यमानास्तव मूर्तयः, आज्यस्य व्यन्तु हूयमानमाज्यमश्नन्तु।

२. हे अग्ने तनूनपात्, द्वितीया तव मूर्तिः, आज्यस्य वेतु हूयमानमाज्यं पिबतु।



तत्र होता "नराशꣳसो अग्न आज्यस्य वेतु" इति याज्यां पठेत्।

"ॐ इदं नराशꣳसाय न मम" इति यजमानस्त्यागं कुर्यात्। अन्यत्सर्वं पूर्ववत्।

ततोऽध्वर्युः पुनरपि जुहूमध्युह्य आश्राव्य यजेति होतारं प्रेषयेत्। ततो जुहूं प्राचीमवतार्य, "ॐ ये यजामहे [1]इडो अग्न आज्यस्य व्यन्तु३ वौ३षट्" ( का० हौ० प० १।४ ) इति होत्रा उक्ते सर्वं घृतं जुहोति।

यजमानश्च "ॐ इदमिड्भ्यो न मम" इति त्यागं विधाय, "त्रयो मम तिस्रस्तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः यशस्वी भूयासम्" इत्यनुमन्त्रयेत्।

ततोऽध्वर्युः जुहूमध्युह्य सव्येन जुहूं गृहीत्वा दक्षिणहस्तेन उपभृतमधोविद्यमानजुह्वग्रमार्गेण उपरिष्टादानीय, उपभृता जुह्वाः स्पर्शमकुर्वन् उपभृतः सकाशात् अर्धमाज्यं जुह्वां निनयेत्। ततः पुनरुपभृतम् अधस्तात् कृत्वा, पुनरप्याश्राव्य, अस्तु श्रौ३षडिति अग्नीधा उक्ते यजेति होतारं प्रेषयेत्।

होता च ॐ ये३ यजामहे [2]बर्हिरग्न आज्यस्य वेतु३ वौ३षट्" ( का० हौ० प० १।४ ) इति पठेत्।

अध्वर्युश्च पूर्ववत् जुहूमवतार्य वषट्कारान्ते अर्धमाज्यं जुहुयात्।

यजमानश्च "ॐ इदं बर्हिषे न मम" इति त्यागं विधाय, "चत्वारो मम चतस्रस्तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ब्रह्मवर्चसी भूयासम्" इति वदेत्।

---

१. हे अग्ने, इडः ईड्याः स्तुत्याः तव मूर्तयः, आज्यस्य व्यन्तु हूयमानमाज्यं पिबन्तु।

२. हे अग्ने, बर्हिः—फलं पूरयन्ती तव मूर्तिः आज्यं पिबतु।

ततोऽध्वर्युः पुनर्जुहूमध्युह्य, आश्राव्य, 'अस्तु श्रौ३षट्'इति अग्नीधा उक्ते यजेति होतारं प्रेषयेत् ।

होता च "ॐये यजामहे स्वाहाऽग्निꣳ स्वाहा सोमꣳ स्वाहाऽग्निꣳ स्वाहा (उपांशु)ऽग्नीषोमौ ( उच्चैः ) स्वाहाऽग्नीषोमौ स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु३ वौ३षट्" ( का० हौ० प० १।४ ) इति पठेत् ।

अध्वर्युश्च पूर्ववत् जुहूं प्राचीमवतार्य अवशिष्टमाज्यं सशेषं जुहुयात् ।

यजमानश्च ॐइदमग्नये सोमायाग्नये ( उपांशु ) अग्नीषोमाभ्याम् (उच्चैः) अग्नीषोमाभ्यां देवेभ्य आज्यपेभ्योऽग्नये स्विष्टकृते च न मम" इति त्यागं विधाय "पञ्च मम न तस्य किञ्चन योऽस्मान् द्वेष्टि यं च वयं द्विष्मः अन्नादो भूयासम्" इति वदेत् ।

पञ्चापि प्रयाजान् एकस्मिन्नेव स्थाने स्थितोऽध्वर्युः जुहुयात् । तैत्तिरीयास्तु अभिक्रम्याभिक्रम्य जुहुयादिति वदन्ति ।

ततोऽध्वर्युः दक्षिणपादेन हविःसमीपं प्रत्यागत्य उपविश्य, जुहूस्थेन प्रयाजशेषेण जुह्वैव ध्रुवायाः, आग्नेयाग्नीषोमीययोः पुरोडाशयोः, उपभृतश्च क्रमेणाभिघारणं कुर्यात् । तत उपविष्ट एव 'अग्नयेऽनुब्रू३हि' इति होतारं प्रेषयेत् ।

होता च 'ॐअग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतो३म' ( य० सं० ३३।९ ) इति पुरोऽनुवाक्यां पठेत् ।

ततोऽध्वर्युः ध्रुवायाः स्रुवेणाज्यं जुह्वां सकृत् तूष्णीमवद्येत् । तत आज्यस्थाल्यास्तूष्णीं स्रुवेणाज्यं गृहीत्वा "ॐआप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः । सूर्य्याया ऊधो अदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्" ( का० श्रौ० ३।३।१२ ) इति मन्त्रेण ध्रुवामभिघारयेत् । एवं चतुर्वारं चतुरवत्तिनः ( पञ्चवारं पञ्चावत्तिनः ) जुह्वां ध्रुवायाः स्रुवेण आज्यमवदाय, आज्यस्थाल्यास्तूष्णीमाज्यं गृहीत्वा, "ॐआप्यायताम्"इति मन्त्रेण चतुर्वारं ध्रुवामभिघारयेत् ।

एवं जुह्वां चतुरवत्तं कृत्वा, उत्थाय, नव्येनातिक्रम्य, 'ओ३ श्रा३वय' इति अग्नीधं प्रेष्य, 'अस्तु श्रौ३षट्' इति तेन प्रत्याश्राविते, 'अग्निं यज' इति होतारमध्वर्युः प्रेषयेत् ।

१. अग्निं प्रथमाज्यभागदेवं प्रति स्वाहा सुहुतमस्तु । एवमुत्तरत्र सर्वत्र बोध्यम् । हे अग्ने, आज्यपाः सर्वे देवाः, जुषाणाः प्रीयमाणाः सन्तः इदानीं त्वन्मुखेन आज्यं पिबन्तु । "अथ यद्पुरोऽनुवाक्यकाः प्रयाजा भवन्ति" इति श्रुतेः प्रयाजेषु पुरोऽनुवाक्याऽभावः ।

२. मुख्यक्रमेण पूर्वम् आग्नेयस्य पुरोडाशस्याभिघारणं, ततः अग्नीषोमीयस्य । दर्शे तु ऐन्द्राग्नस्य । 'ध्रुवाया हविष उपभृतश्च" ( का० श्रौ० ३।३।९ ) इति सूत्रे ध्रुवादीनामनुवादानं स्यादित्युदाहरणार्थम् । तेन स्यादाज्यस्यानभिघारणम् । 'अभिघारणं च प्रयाजशेषप्रतिपत्तिः । आज्यभागार्थं जुह्वा रिक्तीकरणरूपदृष्टार्थत्वात् । हविःसंस्कारार्थत्वे अदृष्टार्थत्वप्रसक्तात् । अदृष्टार्थत्वं च सति दृष्टार्थे न युक्तम् । एवं च प्रयाजशेषेणेति तृतीया द्वितीयार्थे, हवींषीति द्वितीया च सप्तम्यर्थे; दृष्टार्थत्वानुरोधात् । नतश्च असन्निहितपशुपुरोडाशाभिघारणार्थं न प्रयाजशेषः स्थापनीयः ।

१. प्रथमाज्यभागपुरोऽनुवाक्यामन्त्रार्थः—अग्निर्वृत्राणीति । वृत्राणि कर्मानुष्ठाननिवारकाणि पापानि, जङ्घनत् अतिशयेन हनवत्, विपन्यया विशिष्टया अस्मत्कृतया स्तुत्या, द्रविणस्युः अस्मदर्थं धनेच्छुः, समिद्धः सम्यक् ज्वलितः, शुक्रः शोचमानः, आहुतः समन्तादस्माभिराकारितः अयमग्निः—अस्माननुगृह्णात्विति शेषः । पौर्णमास्यामाज्यभागपुरोऽनुवाक्येयम् ।

दर्शे तु ॐअग्निः प्रत्नेन जन्मना शुम्भानस्तन्वꣳ स्वाम् । कविर्विप्रेण वावृधे३म ॥ [ का० हौ० प० १।१२ ] इति प्रथमाज्यभागपुरोऽनुवाक्यां पठेत् ।

यज्ञकर्मणि टेः स्थाने त्रिमात्रिक ओकारः "यज्ञकर्मणि" इति पाणिनीयसूत्रेण ( ८।२।८९ ) विधीयते ।

अस्या अर्थः । अयमग्निः, प्रत्नेन पुरातनेन जन्मना, स्वां तन्वं तनुं, शुम्भानः शोभयन्, कविः विपश्चित्, तत्...विप्रेण मेधाविना कृतां स्तुतिं श्रुत्वा वावृधे इति पाठः ।

होता च "ॐ ये३ यजामहे ऽग्निं जुषाणो अग्नि-राज्यस्य वेतु३ वौ३षट्" ( का० हौ० प० १।४ ) इति याज्यां पठेत् ।

वषट्कारान्तेऽध्वर्युः आग्नेयमाज्यभागमुत्तरपूर्वार्धे ( ईशान-भागे ) जुहुयात् ।

यजमानश्च "ॐ इदमग्नये न मम" इति त्यागं कुर्यात् ।

ततोऽध्वर्युः दक्षिणेन पादेन हविःसमीपमागत्य उपविश्य स्रुचौ अनिधायैव 'सोमायानुब्रू३हि' इति होतारं प्रेष्य—

[2]"ॐ त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहा ।

---

१. प्रथमाज्यभागयाज्यार्थः—जुषाणो अग्निरिति । जुषाणः प्रीयमाणः, अयमग्निः, आज्यस्य वेतु अस्मद्दत्तमिदमाज्यमश्नातु । दर्शेऽपि इयमेव प्रथमा-ज्यभागयाज्या ।

याज्यामन्त्राणामन्त्यस्य टेः "याज्यान्तः" इति ( पा० ८।२।९० ) सूत्रेण प्लुतः । "ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः" ( ८।२।९१ ) "अग्नीत्प्रेषणे परस्य च" ( ८।२।९२ ) इति पाणिनिसूत्राभ्यां ब्रूह्यादीनामादेः ओश्रावये आदेः तस्मा-त्परस्य च प्लुतः ।

पुरोऽनुवाक्या याज्यान्तः पूर्वं "ये यजामहे" इतिनिगदोच्चरं द्वितीयाज्य-भागपुरोऽनुवाक्याऽभावाच्च तत्र याज्यायाः पूर्वं देवता-त्वेन देवतादेशः । प्रयाजेषु तु पुरोऽनुवाक्याऽभावाच्च नादेश इति बोध्यम् । "ये यजामहे" इति निगदश्च देशः । एवमनुयाजेष्वपि नादेश इति बोध्यम् । "ये यजामहे" इति निगदश्च "यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यनेन अनुयाजव्यतिरिक्तेषु यजतिषु विधीयते ।

२. द्वितीयाज्यभागपुरोऽनुवाक्यामन्त्रार्थः—त्वं सोमासीति । हे सोम, त्वं सतां मद्विरनुष्ठितानां कर्मणां पतिरसि । किं च त्वं राजा दीप्तिमान्, वृत्रहा पापघाती, किं च भद्रः फलप्रदत्वेन मङ्गलरूपः क्रतुरसि । क्रतोर्निष्पादकत्वात् ।

द्वौ ॐ सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृडीको न आविशो-त्वम् ॥ [ का० हौ० प० १।१२ ]

इति द्वितीयाज्यभागपुरोऽनुवाक्यां पठेत् ।

अस्या अर्थः—

सोमगीर्भिरिति । हे सोम, वचोविदः वाक्यतात्पर्याभिज्ञाः, वयं गीर्भिः स्तुतिरूपाभिर्वाग्भिः त्वां वर्धयामः । त्वं सुमृडीकः सुखकरः सन् नः अस्मान् आविश प्रविश ।



त्वं भद्रो असि क्रतो३म्" ( का० हौ० प० १।४ ) इति होत्रा पुरोऽनुवाक्यायां पठितायां—

ध्रुवायाः स्रुवेणाज्यं जुह्वां तूष्णीं प्रथममवदाय, आज्यस्था-ल्यास्तूष्णीं स्रुवेणाज्यं गृहीत्वा, "ॐ आप्यायताम्" इति मन्त्रेण ध्रुवामभिघार्य; एवं द्वितीयवारं तृतीयवारं चतुर्थवारं च कृत्वा, जुह्वां चतुरवत्तं सम्पाद्य, उत्थाय, मध्येनातिक्रम्य "ओ३श्रा३-वय"इति अग्नीधं प्रेष्य 'अस्तु श्रौ३षट्' इति तेनोक्ते 'सोमं यज' इति होतारं प्रेष्य—

[1]'ॐ ये३ यजामहे सोमं( का० हौ० प० १।४) जुषाणः सोम आज्यस्य हविषो वेतु३ वौ३षट्' इति होत्रा याज्यायां पठितायां दक्षिणपूर्वार्धे ( आग्नेये ) सौम्यमाज्यभागं जुहुयात् ।

यजमानश्च "ॐ इदꣳसोमाय न मम"इति त्यागं कुर्यात् ।

( अथ प्रधानयागः)

अथाध्वर्युः दक्षिणेन पादेन हविःसमीपमागत्य, उपविश्य 'अग्नयेऽनुब्रू३हि' इति होतारं प्रेष्य—

[2]"ॐ अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वतो३म्" ( य० सं० ३।१२ ) इति होत्रा पुरोऽनुवाक्यायां पठितायां—

---

१. द्वितीयाज्यभागयाज्यामन्त्रार्थः —जुषाणः सोम आज्यस्य हविषो वेतु ।

जुषाणः प्रीयमाणः सोमः, इदमाज्यं हविः अश्नातु । इयमेव दर्शेऽपि ।

२. प्रधानाग्नेययागपुरोऽनुवाक्यामन्त्रार्थः-अग्निर्मूर्धेति । अयमग्निः आदित्य-रूपेण दिवो द्युलोकस्य ककुत् उच्छ्रितो मूर्धा, द्युलोकस्य शिरःस्थानीयः पृथिव्याः पतिः दाहकारित्वेन पालकोऽप्ययम् । किञ्च अपां रेतांसि उदककार्याणि स्थावर-जङ्गमात्मकानि शरीराणि जिन्वति जाठराग्निरूपेण प्रीणयति । इयं पुरोऽनुवाक्या दर्शेऽपि समाना ।

¹स्थालीतो जुह्वां स्रुवेण सकृदुपस्तीर्य आग्नेयपुरोडाशस्य मध्यात् पूर्वार्धाच्चेत्येवं द्विः भृतावदानेन अवदाय, पुनः स्थालीतः स्रुवेण प्रत्युपस्तीर्य, क्षतयोरभ्यङ्क्तं कृत्वा, मध्येनातिक्रम्य, यजतिदेशं गत्वा, आश्राव्य, "अस्तु श्रौ३षट्" इति अग्नीधा उक्ते 'अग्निं यज' इति होतारं प्रेष्य–

"ॐ्ये३यजामहे ²ऽग्निं भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहां३–वौ३षट्" ( य० सं० १५।२३ ) इति होत्रा याज्यायां पठितायां समिद्धतमे जुहुयात्।

"ॐइदमग्नये न मम" इति यजमानस्त्यागं कुर्यात्।

अथाध्वर्युः दक्षिणेन पादेन हविःसमीपमागत्य, उपविश्य, "अग्नीषोमाभ्याम्" इति ( दर्शे विष्णवे इति ) उपांशु उक्त्वा, 'अनुब्रू३हि' इति प्रथमस्वरेण होतारं प्रेष्य–

"ॐ ( उपांशु ) ³अग्नीषोमाविमं सु मे शृणुतं वृषणा

---

१. उपस्तराभिघारौ स्थाल्याज्येनैव न तु ध्रुवाया इति "आहवनीयवजतयो ध्रुवायाः" ( का० श्रौ० ११।८।१९ ) इति सूत्रे कर्कभाष्ये स्पष्टम्।

२. प्रधानाग्नेययाज्यामन्त्रार्थः भुवो यज्ञस्येति। अयमग्निः, भुवः भूलोकस्य तत्रानुष्ठेयस्य यज्ञस्य, तस्मिन् यज्ञे प्रवर्तकस्य रजोगुणस्य च नेता प्रवर्तको निर्वाहकः। तादृश हे अग्ने, त्वं यत्रा = यत्र, यस्यां दिवि, सूर्यरूपः भूत्वा नियुद्भिः रथे नितरां योज्यमानाभिः शिवाभिः उत्तमाभिः अश्वजातिभिः सचसे समवैषि, तस्यां दिवि, मूर्धानं शिरोवदुन्नतस्थितिं, दधिषे धारयसि। मूर्धानं विशिनष्टि–स्वर्षां स्वः स्वर्लोकं स्यति सर्वदा नितनोति स्वर्षाः तादृशम्। हे अग्ने, त्वमस्मिन् यज्ञे हव्यवाहं हविषः प्रापिकां जिह्वां ज्वालां चकृषे करोषि। इयं याज्यापि दर्शपूर्णमाससाधारणी।

३. पौर्णमासीयोपांशुयागपुरोऽनुवाक्यामन्त्रार्थः—अग्नीषोमाविति। हे अग्नीषोमौ, वृषणा=वृषणौ कामानां वर्षयितारौ, युवां मे मदीयम् इमं हवम्=आह्वानं, सुशृणुतं सुष्ठु आकर्णयतम्। सूक्तानि अस्मदीयानि, प्रतिहर्यतं मनसा प्रतिगृह्णीतम्। दाशुषे हविर्दत्तवते यजमानाय मयः सुखं भवतं=भावयतं संपादयतम्।



हवम्। प्रतिसूक्तानि हर्यतं भवतं दाशुषे मयः [ उच्चैः ] ओ३म्" ( का० हौ० प० १।११ ) इति होत्रा पुरोऽनुवाक्यायामुपांशु पठितायाम्–

ध्रुवायाः स्रुवेण जुह्वाम् आज्यं सकृत् तूष्णीमवदाय, तत आज्यस्थाल्यास्तूष्णीमाज्यं स्रुवेण गृहीत्वा "ॐआप्यायताम्" इति मन्त्रेण ध्रुवामभिघार्य; एवं द्वितीयवारं तृतीयवारं चतुर्थवारं च कृत्वा, जुह्वां चतुरवत्तं सम्पाद्य, मध्येनातिक्रम्य, यजतिदेशं गत्वा, आश्राव्य, "अस्तु श्रौ३षट्" इति अग्नीधोक्ते 'अग्नीषोमौ' इत्युपांशु ( दर्शे विष्णुमिति ) उक्त्वा, यजेति प्रथमस्वरेण होतारं प्रेष्य–

"ॐ्ये३ यजामहे (उपांशु) ¹अग्नीषोमौ जुषाणावग्नी-

---

ॐ–इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे–ओम्। [ य० सं० ५।१५ ] इति दार्शिकोपांशुयागस्य पुरोऽनुवाक्या। अस्या अर्थः। वेवेष्टि सर्वं व्याप्नोति भूतेन्द्रियमनोजीवभावेन सर्वान् प्राणिनः आविशतीति विष्णुः, इदं जगत्, विचक्रमे विक्रान्तवान्। पद्यते ज्ञायते अनेनेति पदं, त्रिधा अग्निवायुसूर्यरूपेण क्रमात् भूम्यन्तरिक्षद्युलोकेषु, निदधे निहितवान्। भूमौ अग्निरूपेण, अन्तरिक्षे वायुरूपेण, दिवि सूर्यरूपेणेत्यर्थः। पांसवो भूम्यादिलोकरूपा विद्यन्ते यस्य तत् पांसुरं तस्मिन् पांसुरे, अस्य विष्णोः पदे समूढं सम्यगन्तर्भूतं, विश्वमिति शेषः। यद्वा अस्य विष्णोः, पदम् अद्वैतात्मकं स्वरूपं, समूढम् अन्तर्हितम् अकृतात्मभिरज्ञातं, पांसुरे रजस्वले प्रदेशे निहितमिव। यथा रजस्वले प्रदेशे निहितं किंचिद्वस्तु अकृतात्मभिः न ज्ञायते, तथा अद्वैतस्वरूपमपि। कृतात्मभिस्तु विविच्य आत्मत्वेन ज्ञायते एव। तदुक्तं कठाध्याये पञ्चमकण्डिकायां "तद्विष्णोः परमं पदम्" इति।

१. पौर्णमासीयोपांशुयागयाज्यार्थः—अग्नीषोमाविति।

हे अग्नीषोमौ, जुषाणौ प्रीयमाणौ अग्नीषोमौ, आज्यस्य वीताम् आज्यं पिबताम्।

ॐप्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ( य० सं० ५।२० ) इति दार्शिकोपांशुयागयाज्या। अस्या अर्थः। यस्य विष्णोः, उरुषु महत्सु, त्रिषु

षोमावाज्यस्य वीता३म् [ उच्चैः ] वौ३षट्" ( का० हौ० प० १।११ ) इति होत्रा याज्यायां पठितायां—समिद्धतमे जुहुयात् ।

"ॐ इदम् (उपांशु) अग्नीषोमाभ्यां (दर्शे विष्णवे इति) ( उच्चैः ) न मम" इति यजमानस्त्यागं कुर्यात् ।

अथाध्वर्युः पुनः दक्षिणेन पादेन प्रत्यागत्य उपविश्य 'अग्नीषोमाभ्यामनुब्रू३हि' इति (दर्शे इन्द्राग्निभ्यामनुब्रू३हीति) होतारं प्रेष्य—

"ॐ अग्नीषोमा सवेदसा सहूती वनतं गिरः ।

---

विक्रमणेषु लोकेषु विश्वानि सर्वाणि, भुवनानि भूतजातानि अधिक्षियन्ति उपरि निवसन्ति । तद्विष्णुः वीर्येण वीरकर्मणा प्रस्तवते प्रकर्षेण स्तूयते । मृगः शुद्धः अपहतपाप्मा, भीमः असुराणां भयप्रदत्वाद्भीषणः । कुचरः कुत्स्यं चरतीति कुचरः, छान्दसं संप्रसारणम् । गिरिष्ठाः गिरिर्मेघः, तत्र वृष्टयर्थं तिष्ठतीति गिरिष्ठाः । इन्द्र इति विशेष्यमध्याहार्यम् । 'न' शब्द इवार्थे । स इव विष्णुः स्तूयते । यद्वा नशब्दः पादपूरणः । मृग इत्यादिभिः पदैः विष्णुरेव विशेष्यते । अपहतपाप्मत्वादीनामाश्रयेण तत्रैव सम्भवात् । कुचर इत्यस्य व्याख्यानान्तरम्—कौ पृथिव्यां मत्स्यकूर्मादिरूपेण चरतीति । गिरिष्ठा इत्यस्य च गिरौ वेदवाक्ये देहे आत्मत्वेन तिष्ठतीति ।

१. अग्नीषोमीयपुरोडाशयागस्य पुरोऽनुवाक्यार्थः अग्नीषोमेति ।

हे अग्नीषोमा = अग्नीषोमौ, गिरः अस्मदीयाः स्तुतीः, वनतं भजतम् । तौ विशिनष्टि सवेदसेत्यादिना । सवेदसा=सवेदसौ समानज्ञानयुक्तौ, सहूती समानाह्वानयुक्तौ । हे अग्नीषोमौ, युवां देवत्रा देवानां मध्ये सम्बभूवथुः सम्भूयैव स्थितौ । न कदाचिदपि अन्योन्यवियुक्तावित्यर्थः ।

"ॐ इन्द्राग्नी अवसाऽऽगतमस्मभ्यं चर्षणी सहा । मा नो दुःशंस ईशतो३म्" [ का० हौ० प० १।१२ ]॥ इति दर्शे ऐन्द्राग्नपुरोऽनुवाक्या [ ऋ० सं० ५-६-१८ ] । अस्या अर्थः—इन्द्राग्नी अवसागतमिति । चर्षणीसहा=चर्षणीसहौ चर्षणीनां मनुष्याणां शत्रुभूतानां सहौ अभिभवितारौ, हे इन्द्राग्नी, अस्मभ्यं स्तोतृभ्यः, देवेन अवसा अन्नेन सह, आगतम् आगच्छतम् । दुःशंसः दुष्टाभिशंसनः पारुष्यवादी शत्रुः, नोऽस्मान्, मा ईशत मा ईशिष्ट । अस्मान् बाधितुं मा शक्नोतु ।



सन्देवत्रा बभूवथो३म्" (का० हौ० प० १।११ इति पुरोऽनुवाक्यायां पठितायाम् स्थालीतो जुह्वां स्रुवेण सकृदुपस्तीर्य, अग्नीषोमीयपुरोडाशस्य मध्यात्पूर्वार्धाच्चेत्येवं नूनावदानेन द्विरवदाय, पुनः स्थालीतः अवत्ते सकृदभ्युपस्तीर्य, अवदानक्षतयोः घृतेनाभ्यङ्गं कृत्वा, सव्येनातिक्रम्य, यजतिदेशं गत्वा, ओ३श्रा३वयेत्यग्नीध्रं प्रेष्य, अस्तु श्रौ३षडिति तेनोक्ते 'अग्नीषोमौ यज' इति (दर्शे इन्द्राग्नी यजेति) होतारं प्रेष्य, "ॐ ये३यजामहेऽग्नीषोमौ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् । युवंसिन्धूँ रभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतां३ वौ३षट्" (का० हौ० प० १।११) इति होत्रा याज्यायां पठितायां समिद्धतमे जुहुयात् ।

---

१. अग्नीषोमीयपुरोडाशयाज्यार्थः । युवमेतानीति । हे सोम, त्वम् अग्निश्चैतौ युवं=युवां सक्रतू समानसंकल्पौ सन्तौ, दिवि द्युलोके एतानि रोचनानि नक्षत्राणि, अधत्तम् अस्थापयतम् । हे अग्नीषोमौ, युवं=युवां, गृभीतान्=गृहीतान् सिन्धून् रथ्योदकादिनिमित्तेन अपुनरवापवादेन पङ्कादिरूपेण, अवद्येन दोषेण च गृहीताः सर्वा नदीः, अभिशस्तेः पूर्वोक्तादपवादात् अवद्यात् पूर्वोक्ताद्दोषाच्च, अमुञ्चतं मोचितवन्तौ । "गृभीतान्" इति आश्वलायनानां पाठः "गृभीताम्" इति कात्यायनहौत्रपरिशिष्टपाठे तु अस्मानिति अध्याहार्यम् । तथा च 'अस्मान् गृभीतां=गृहीतानामिति अनुगृहीतानामित्यर्थः । यद्यप्येतत्सर्वम् ईश्वरकृतं तथापि तद्रूपत्वेन एतौ स्तूयेते ।

गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।

इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः ॥

ऋ० सं० ५-६-१५ । इति अमावास्यायाम् ऐन्द्राग्नप्रधानयाज्या । अस्या अर्थः गीर्भिरिति । हे इन्द्राग्नी, प्रमतिं युवयोरनुग्रहबुद्धिम्, इच्छमानः, विप्रो मेधावी ( वसिष्ठः ), यशसं यशसा युक्तं, पूर्वभाजं पूर्वमेव सम्भजनीयं, रयिं धनमुद्दिश्य, गीर्भिः स्तुतिभिः, ईट्टे युवां स्तौति । हे वृत्रहणा=वृत्रहणौ, सुवज्रा=सुवज्रौ शोभनायुधौ, नव्येभिः=नव्यैः प्रशस्तैः, देष्णैः दानयोग्यैः धनैः, नोऽस्मान्, प्रतिरतं = प्रवर्धयतम् ।

( का० हौ० प० १।४ ) इति होत्रा निगदमहितायां याज्यायां पठितायाम् अन्याभिराहुतिभिरसंसृष्टां स्विष्टकृदाहुतिं जुहुयात् ।

"ॐइदमग्नये स्विष्टकृते न मम" इति यजमानस्त्यागं कुर्यात् । ( अवदानानेकत्वेऽपि संप्रतिपन्नदेवतैकत्वान्सकृत्प्रक्षेपः । प्रतिपत्त्यर्थकर्मत्वात् यावदुक्तेऽपि स्विष्टकृतः प्रवृत्तिः ) ।

( ततः सर्वेषां प्रणीतोदकस्पर्शनम् । स्विष्टकृतो रुद्रियत्वात् इति देवः । )

अथाध्वर्युः स्फ्योपग्रहेण जुहूं प्रस्तरे निधाय, वेदोपग्रहेण उपभृतं ततः पश्चान्निधाय, स्फ्यं गृहीत्वा, प्रणीताद्भिः अनुयाजार्थं संचरं ( होमार्थगमनागमनमार्गम् ) अभ्युक्ष्य, प्राशित्रहरणपात्रे प्राशित्रमवद्येत् । तद्यथा प्राशित्रहरणपात्रं सव्यहस्ते गृहीत्वा, आज्यस्थाल्या आज्येन उपस्तीर्य, आग्नेयपुरोडाशस्य मस्तकात् यवमात्रं द्विरवदाय, तथा अग्नीषोमीयपुरोडाशात् ( ऐन्द्राग्नपुरोडाशात् ) यवमात्रं द्विरवदाय, आज्यस्थाल्याः स्रुवेण उपरिष्टादभिघारयेत् । ततः प्राशित्रं द्वितीयेन पात्रेण अपिधाय, प्रोक्षितेन होमसंचरेणैव तत्प्राशित्रं ब्रह्मणे प्रदाय, अप उपस्पृशेत् । प्राशित्रस्य रुद्रियत्वात् । ब्रह्मा चाध्वर्युणा समर्प्यमाणं प्राशित्रं "ॐमित्रस्य त्वा चक्षुषा प्रतीक्षे" (का० श्रौ० २।२।१३) इति मन्त्रेण अवलोक्य "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् प्रतिगृह्णामि" ( य०

इति शाङ्गिकस्विष्टकृद्याज्या ( ऋ० सं० ४।५।१९ )। अस्या अर्थः । हे होतः होमकर्तः पावक शोधक, शोचे दीप्यमान । स्विष्टकृदग्ने, विश्वः अविष्टस्य अनुष्ठितस्य अध्वरस्य यज्ञस्य यद्विरिष्टमिति तद् अथ वेः = तद् इह अशान भवय । हि यस्मात्, त्वं यज्ञा यागस्य कर्ता तस्मात् ऋता = ऋते अन्तर्दीते यज्ञे. महिना महिम्ना, देवान् यजामि प्रीणयसि । यद् यस्मात् कारणात् नित्यः विशिष्टो भवसि तस्मात् कारणात् हे यविष्ठ युवतम, अथ ते = तव, या ज्या यानि हवींषि, अस्माभिर्दीयन्ते, तानि सर्वाणि इह स्वीकुरु ( का० हौ० प० १.१२ )।



सं० २।११ ) इति मन्त्रेण अञ्जलिना प्रतिगृह्य, "[illegible]स्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्[illegible]न्" ( आददे ) इति मन्त्रेण अनामिकाङ्गुष्ठाभ्यां पात्रात् [illegible]त्र-भागमादाय, "ॐअग्नेष्ट्वाऽऽस्येन प्राश्नामि" ( य० सं० २।११ ) इति मन्त्रेण दन्तैरनुपस्पृशन् प्राशित्रं प्राश्नीयात् ।

अत्र प्राशनाभावपक्षे वेदेर्दक्षिणांसे स्तृतानि बर्हींषि अपोह्य, "ॐपृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यं रक्ष" इति मन्त्रेण अनास्तृतभूमौ प्राग्दण्डं तत्पात्रं सादयित्वा अन्यभागप्राशनानन्तरं उक्तप्रकारेण तद्भक्षयेत् । आचम्य, प्राशित्रहरणपात्रे अद्भिः उत्करे प्रक्षाल्य, "ॐ या अप्स्वन्तर्देवतास्ता इदं शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ । घसिना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामि" ( का० श्रौ० २।२।१८ इति मन्त्रेण नाभिमालभ्य अप उपस्पृशेत् ।

ततोऽध्वर्युः इडापात्र्यां स्थाल्याज्येनोपस्तीर्य पुरोडाशयोः दक्षिणतो मध्याच्च अवदाय स्थाल्याज्येन द्विरभिघार्य, एवं पञ्चावत्तां सम्पाद्य, ततः षडवत्तपात्रे उभयोः पुरोडाशयोः कुतश्चित्प्रदेशात् आग्नीध्रभागमवदाय, ततः कस्मिंश्चित् [illegible]काष्ठपात्रे उभयोः पुरोडाशयोः यतः कुतश्चित् प्रदेशात् ब्रह्मभाग-ध्रुवायाः ब्रह्मभागे निदध्यात् ।

ततः कस्मिंश्चित् यज्ञियकाष्ठपात्रे धातुपात्रे वा पुरोडाशयोः पूर्वार्धात् यजमानभागं दीर्घं प्रशीर्य ( छेदयित्वा ), ध्रुवायाः पुरस्तात् ( बर्हिषामुपरि ) निदध्यात् ।

अङ्गुष्ठपर्वमात्रं प्रधानावदानं, ततो महत् स्विष्टकृदवदानं, ततो महत् इडावदानं, ततो महत् चातुर्धाकरणिकानाम् ।

"ॐ इदमग्नीषोमाभ्यां न मम" ( दर्शे ॐ इदमिन्द्राग्नीभ्यां न ममेति ) इति यजमानस्त्यागं कुर्यात् ।

अथाध्वर्युः पुनः दक्षिणेन पादेन हविर्धानमागत्य, उपविश्य, 'अग्नये स्विष्टकृतेऽनुब्रू३हि' इति होतारं प्रेष्य–

"ॐ प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वाᳬ शश्वन्त उपयन्ति वाजा३ः" ( य० सं० १७।७६ ) इति होत्रा पुरोऽनुवाक्यायां पठितायां, स्थालीतः जुह्वां स्रुवेण सकृदुपस्तीर्य, आग्नेयस्य अग्नीषोमीयस्य ( दर्शे ऐन्द्राग्नस्य ) च पुरोडाशस्य उत्तरार्धात् इत्येवं सूतावदानेन द्विरवदाय, स्थालीतः स्रुवेण द्विरभिघार्य, अवदानक्षतयोरभ्यञ्जमकृत्वा उत्थाय, सव्येन अतिक्रम्य, यजतिदेशं गत्वा, ईशानाभिमुखोऽवस्थाय 'ओ३ श्रा३ वय' इति अग्नीधं प्रेष्य, अस्तु श्रौ३षट्' इति तेनोक्ते 'अग्निᳬस्विष्टकृतं यज" इति होतारं प्रेष्य—

"ये३यजामहेऽग्निᳬ स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाडग्नेः प्रिया धामान्ययाट् ( उपांशु ) अग्नीषोमयोः ( दर्शे विष्णोः ) ( उच्चैः ) प्रिया धामान्ययाडग्नीषोमयोः ( दर्शे इन्द्राग्न्योः ) प्रिया धामान्ययाड् देवानामाज्यपानां प्रिया धामानि । यक्षदग्नेर्होतुः प्रिया धामानि यक्षत् स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषताᳬ हविरिमो अग्ने वीततमानि हव्या ऽजस्रो वक्षि देवतातिमच्छ प्रति न ईᳬ सुरभीणि व्यन्तु३ वौ३षट्"–

---

१. य० सं० १७ अ. ७६ मं. । पौर्णमासे स्विष्टकृत्पुरोऽनुवाक्या । अस्या अर्थः-प्रेद्धो अग्ने इति । प्रकर्षेणेद्धः दीप्तः सन्, हे अग्ने, नोऽस्माकं, पुरोऽग्रतो व्यवस्थितः, एतया अजस्रयाऽनुपक्षीणया, सूर्म्या समित्काष्ठिकया, भूयोऽपि दीदिहि दीप्यस्व । हे यविष्ठ=युवतम, यतः त्वामेव शश्वन्तः शाश्वतिकाः, वाजा अन्नानि, उपयन्ति उपगच्छन्ति । अतः त्वमेव दीदिहि इति पूर्वेण सम्बन्धः ।

ॐपिप्रीहि देवाँ२ ॥ उशतो यविष्ठ विद्वाँ२ ॥ ऋतूँ२ ॥ ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वᳬ होतृणामस्यायजिष्ठो३म् ॥

( का० हौ० प० ११२ ) इति दार्शिकस्विष्टकृत्पुरोऽनुवाक्या । अस्या अर्थः—पिप्रीहि देवानिति । हे यविष्ठ अग्ने, उशतः कामयमानान् देवान्, पिप्रीहि अतिशयेन प्रीणय । हे ऋतुपते [illegible] कालपरिपालक अग्ने, त्वम् ऋतून् यागकालविशेषान्, विद्वान् जानन् वर्तसे, तस्मात् इह उचिते काले यज । देवेषु भव दैव्या ये ऋत्विजः सन्ति "अग्निर्होता, अश्विनाऽध्वर्यू, त्वष्टाऽग्नीत्" इत्यादिनाऽऽम्नाताः, तेभिः = तैः दैव्यैः सह त्वम् अस्य यजमानस्य सम्बन्धिनां होतृणाम् ऋत्विजां मध्ये आयजिष्ठः सर्वतो यष्टृतमोऽसि ।

१. स्विष्टकृन्निगदः-अयाडग्निरिति । प्रथमाज्यभागदेवस्याग्नेः यानि प्रिया = प्रियाणि धामानि स्थानानि तेषु सर्वेषु दैव्यहोतृरूपोऽग्निः अयाट् = अयाक्षीत् इष्टवान् । एवम् अयाट् सोमस्येत्यादिषु योज्यम् । होतुरग्नेः होमस्य स्विष्टत्वसंपादकस्याग्नेः, यानि प्रियाणि स्थानानि सन्ति, तेषु दैव्यो होता स्विष्टकृदग्निः यक्षत् यजतु । स्विष्टकृदग्निः, आत्मनः प्रियाणि धामानि यजतु—स्वस्थानेषु स्वं भागमपि प्रापयत्वित्यर्थः । यद्वा स्वानेव मूर्तिविशेषान् तेजसान् यजत्वित्यर्थः । उत्तरकालं यष्टव्यत्वात् यक्षत् इति विध्यर्थत्वेन स्विष्टकृतो निर्देशः । उक्तानां सर्वेषां देवानां स्वकीयो महिमा योऽस्ति तमुद्दिश्य दैव्यो होता यक्षत् यजतु । आयजताम् आभिमुख्येन यागं कुर्वतां यजमानानाम्, एज्याः आभिमुख्येन यष्टव्याः, इषः अभीष्टा या देवताः सन्ति, ताः सर्वाः अध्वरा = अध्वरे अस्मिन् यज्ञे स जातवेदाः स्विष्टकृत् अग्निः, कृणोतु स्विष्टाः करोतु । तदर्थम् अयं स्विष्टकृदग्निः इह हविर्जुषताम् ।

२. पौर्णमासायस्विष्टकृद्याज्या ऋ. सं. ५-१-[ २६ ] । इमो अग्ने वीततमानीति । हे अग्ने, त्वम् अजस्रः अनवरतः सन्; इमो = इमानि वीततमानि अतिशयेन कान्तानि, हव्या = हव्यानि, देवताति देवानां समूहं, वक्षि वह, अच्छ गच्छ च । नः अस्मदीयानि, सुरभीणि शोभनानि, ईम् एतानि हव्यानि, देवाः प्रतिव्यन्तु प्रत्येकं कामयन्ताम् ।

१ "सर्वत्र गायत्रीभिरनुवाक्यानां वषट् करोति विराड्भिश्च संयाज्यासु" इति कात्यायनसूत्रात् ( का० हौ० प० २।३ ) अर्द्धर्चे विरामाभावः ।

अग्ने यद्य विशो अध्वरस्य होतः पावक शोचे वेष्ट्वᳬ हि यज्वा ।
ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य ॥

'दैवतमौविष्टकृतैडचातुर्धाकरणिकानामुत्तरोत्तरं ज्यायः' इति वचनात् ।

ततः प्रत्यङ्मुखो भूत्वा इडां होत्रे प्रदाय, इडां हस्तेनाविमुञ्चन् होतारं प्रदक्षिणीकृत्य, होतुरग्रे प्रत्यङ्मुख उपविश्य, होत्रा समर्पितामिडां प्रतिगृह्य, इडात एव स्रुवेणाज्यमादाय, होतुस्तर्जन्या उत्तमे मध्यमे च पर्वणि स्रुवेण अञ्ज्यात् ।

होता च अधरपर्वस्थितेनाज्येन अधरोष्ठे "ॐ [1]मनसस्पतिना ते हुतस्याश्नामीषे प्राणाय" (का० श्रौ० प० ११५) इति मन्त्रेण निलिप्य उत्तमपर्वस्थितेनाज्येन उत्तरोष्ठे "ॐ [2]वाचस्पतिना ते हुतस्याश्नाम्यूर्जे उदानाय" (का० श्रौ० प० ११५) इति मन्त्रेण निलिम्पेत् । तत उदकोपस्पर्शं कुर्यात् ।

ततो होतुर्हस्ते इडास्थपुरोडाशावदानादेव अध्वर्युणा चतुरवदाने कृते पञ्चममवदानं होता स्वयमेव गृह्णीयात् ।

ततोऽध्वर्युः इडां होत्रे समर्पयेत् ।

उपहूयमानायामिडायां होतारं सर्वेऽन्वारभेरन् ।

होता च अध्वर्युणा समर्पितामिडां प्रतिगृह्य, अप्रसारिताभिरमुष्टिकृताभिरङ्गुलिभिः मुखमात्रे प्रदेशे धारयित्वा [3]ॐ(उपांशु)

१. मनसस्पतिश्चन्द्रः, तेन हुतस्य हविष्ट्वेन प्रक्षिप्तस्य, ते तव, अंशम्, इषे अन्नलाभाय, प्राणाय स्वदेहे चिरं प्राणावस्थानाय च प्राश्नामि भक्षयामि । आज्येनेति मंत्रोप्यमध्याहार्यम् ।

२. वाचस्पतिना वाचोऽधिदेवतया अग्निना, हुतस्य, ते अंशम् ऊर्जे अन्नरसाय, उदानाय अधोवायोः म..त् निर्गमनाय च भक्षयामि । शेषं प्राग्वत् ।

३. इडोपह्वानमन्त्रार्थः-उपहूतं रथन्तरं सामेति । रथन्तरं साम, तत् पृथिव्या सह, मया उपहूतं सन्निधौ यथा तिष्ठति तथा आह्वानं कृतमित्यर्थः । एतन्मन्त्रगतरथन्तरशब्देन भूमिरुपलक्ष्यते । यथा षट्सु पृष्ठस्तोत्रेषु रथन्तरं साम आद्यं, तथा त्रिषु लोकेषु भूमिराद्या । मन्त्रगतेन पृथ्वीशब्देन तत्कार्यं सस्यादिकम् उपलक्ष्यते । तथा सति सस्यादिना सह भूमिरुपहूता इत्येवं मन्त्रवाक्यस्यार्थः ।



उपहूतं रथन्तरं सह पृथिव्योप माँ रथन्तरं सह पृथिव्या ह्वयतामुपहूतं वामदेव्यं सहान्तरिक्षेणोप मां वामदेव्यं सहान्तरिक्षेण ह्वयतामुपहूतं बृहत् सह दिवोप मां बृहत् सह दिवा ह्वयतामुपहूता गावः सहर्षभा उप मां गावः सहर्षभा ह्वयन्तामुपहूता सप्तहोत्रा सौम्येनाध्वरेणोप माँ सप्तहोत्रा सौम्येनाध्वरेण ह्वयतामुपहूतेडा तनुरिरूप मामिडा तनुरिर्ह्वयतामुपहूतः सखा भक्ष उप माँ सखा भक्षो ह्वयतामुपहूतः हेगुप माँ हेग् ह्वयतामुपहूतोऽग्निरुपहूतः (का० श्रौ० प० ११५) इति पठित्वा—

(उच्चैः) [4]इडोपहूतोपहूतेडोपो अस्माँ इडा ह्वयतामिडोपहूता (का० श्रौ० प० ११६) इति पठेत् ।

एवम् उत्तरेऽपि मन्त्रा अनुपदं व्याख्येयाः । अन्तरिक्षवाचिना वामदेव्यशब्देन तत्सामसमाप्त्याः पशव उपलक्ष्यन्ते । बृहच्छब्देन तत्सामसमाप्यत्वात् वृष्टिर्लक्ष्यते । सहार्थाः पृथिव्यादिलोका उपहूता इत्यर्थः ।

होता१ प्रशास्ता२ ब्राह्मणाच्छंसी३ पोता४ नेष्टा५ आग्नीध्रः६ अच्छावाक७ इत्येते सप्त होतारः । एते सप्त होतारो यस्मिन्नध्वरे तेन सप्तहोत्रा सौम्येनाध्वरेण सह उपहूता, इडेति शेषः । एवमुत्तरवाक्येऽपि इडापदमध्याहृत्य सप्तहोत्रा सौम्येनाध्वरेण सह इडा मामुपह्वयतामिति व्याख्येयम् । "तदेनाँ सप्तहोत्रा सौम्येनाध्वरेणोपह्वयते" (श० ब्रा० १।८।१।२०) इति वाक्येन इडार्थत्वस्यैवावगमात् । सर्वत्र मामिति यजमानस्याभिधानम् ।

भक्षशब्देन सुरूपः प्राणो गृह्यते । स च देवयज्ञस्य सखा । हेगित्यस्य शरीरवाची । उपहूतं हेग् इति शरीरमेव उपहूयते । तत सर्वमेवेडामुपह्वयते, शरीरस्य सर्वात्मकत्वात् ।

४"इडोपहूतोपहूतेडा" इत्यादौ इडाशब्देन पशवो गृह्यन्ते । तेषां मनुष्यात् प्रसूतत्वात् मनुरुपह्वयते । इडायाः प्रथमं मनुना उत्पादनात् इडा मानवीत्युच्यते । इडायाः पश्चात् घृतसर्पादनात् तस्मात् घृतपदीत्युच्यते । पुरा मित्रावरुणौ इडां समैरयताम् तस्मात् मैत्रावरुणीत्युच्यते । देवेन ईश्वरेण पुरा सृष्टा ब्रह्मा प्रजापतिरूपा इडा ब्रह्म वः ।

५

होत्रा "इडोपहूता" इत्युच्यमाने यजमानः [1]आग्नेयं पुरोडाशं चतुर्धा कृत्वा "ॐ ब्रह्मन् पिन्वस्वायुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून् मे धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्रजया पशुभिराप्यायस्व" इति ( का० श्रौ० ३।४।१० ) मन्त्रेण बर्हिषि निधाय आग्नेय्यादिविदिक्षु चतुरो भागान्निधाय प्रदक्षिणम् आग्नेयस्थानादारभ्य 'इदं ब्रह्मणः' 'इदꣳ होतुः' 'इदमध्वर्य्योः' 'इदमग्नीधः' इत्येवम् ऋत्विक्सम्बन्धित्वेन प्रकाशयेत् । ततो भागानालभ्य "ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्" इति ( य० सं० २।३१ ) मन्त्रं सस्वरं जपेत् । ततो भागान् विसृज्य "ॐ अमीमदन्त पितरो यथाभागमावृषायिषत" इति ( य० सं० २।३१ ) मन्त्रं सस्वरं जपेत् । ( अत्रापसव्यं दक्षिणाभिमुखत्वं चेति देवमतम् ) ।

ततः (अप उपस्पृश्य) 'इदं ब्रह्मणे' इत्युक्त्वा ब्रह्मणे समर्प्य, 'इदꣳ होत्रे' इति होत्रे समर्प्य, 'इदमध्वर्यवे' इति अध्वर्यवे समर्प्य, 'इदमग्नीधे' इति अग्नीधे समर्प्य, 'उपहूते द्यावापृथिवी' इति होत्रा पठ्यमाने अग्नीधे षडवत्तं समर्प्य 'उपहूतोऽयं यजमानः इति होत्रा पठ्यमाने—

"ॐ मयीदमिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् । अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिषः" ( य० सं० २।१० ) इति मन्त्रं सस्वरं पठेत् ।

१. "आग्नेयं चतुर्धा करोति" इति सामान्यतरैकवाक्यतया आग्नेयस्यैव चतुर्धाकरणं न अग्नीषोमीयस्य । प्राशित्रावदानम् आग्नीध्र–ब्रह्म–यजमानभागावदानं च उभाभ्यां पुरोडाशाभ्यामविशेषादिति "उभौ वा अविशेषात्" ( का० श्रौ० ३।४।१२ ) इति सूत्रे कर्कभाष्ये स्पष्टम् ।



होता च उच्चैः [2]"मानवो घृतपदुत मैत्रावरुणी । ब्रह्म देवकृतोपहूतोपहूता दैव्या अध्वर्यव उपहूता मनुष्याः । य इमं यज्ञमवान् ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो देवा म इदꣳ हविर्जुषन्तामिति तस्मिन्नुपहूतः" ( का० हौ० प० ११६ ) इति पठेत् ।

ततः सर्वे [1]प्रणीतोत्करावन्तरेण निष्क्रम्य, क्वचित् पवित्रस्थले उपविश्य, यजमानसमर्पितं स्वं स्वम् इडाभागादिकं [2]समर्पणक्रमेण भक्षयेयुः । तत्र प्रथममग्नीच्चतुर्धाकरणभागं प्राश्य, आचम्य "ॐ उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयताम् अग्निराग्नीध्रात् स्वाहा" ( य० सं० २।१० ) इति मन्त्रेण

देव्याः "अश्विनौ हि देवानाम् अध्वर्यू आस्ताम्" इत्यादिश्रुतिषु श्रुताः ये अध्वर्यवः, ये च दृश्यमाना मानुषाः तेषाम् उपह्वानं दैव्या अध्वर्यव इत्यादिना प्रदर्शितम् । पूर्वोक्ता दैव्या मानुषाश्च ये अध्वर्यवः ते सर्वेऽपि इमं यज्ञम् अवान् अवन्तु, यज्ञपतिं च वर्धान् वर्धयन्तु इति आशिषः प्रार्थना । द्यावापृथिवी=द्यावापृथिव्यौ देवानुत्पत्तेः पूर्वमेव उत्पन्ने अतः पूर्वजे इत्युच्येते । ऋतशब्दवाच्यो यज्ञोऽनयोर्वर्तते इति ऋतावरी=ऋतावर्यौ । नैते केवलम् ऋत्विगादिरूपे किन्तु देवी=देव्यौ । देवाः पुत्रा ययोस्ते देवपुत्रे । ओदनं विना उत्तरदेवयज्यायां भूमसि तत्रोपह्वानेन यजमानस्य जीवनं प्रार्थ्यते । यस्य प्रजा भवति तस्य दशधा प्रजया हविष्क्रियते, एवं यस्य पशवो भवन्ति स भूयो भूयो हविष्करोति, अतः प्रजा पशवश्च हविष्करणम् । तत्रोपह्वानेन प्रजापशुसमृद्धिः प्रार्थ्यते । देवाः इदमस्मै इति ऋत्विगादिरूपाः, इदं=हविर्लक्षणं, मे=मम=यजमानस्य हविर्जुषन्तां सेवन्तामित्येवं यस्मिन् तदङ्गतो तत्रोपह्वानेन महाक्रतुसमृद्धिः प्रार्थ्यते ।

१. "प्रणीतोत्करावन्तरेष्टिषु" इति सूत्रेण ( का० श्रौ० १।४।४२ ) प्रणीतोत्करान्तरेण इष्टिषु ऋत्विजां गमनागमनमार्गबोधनात् तन्मार्गेण निष्क्रमणम् ।

२. तत्र पूर्वं चतुर्धाकरणभागस्य समर्पणात् तद्भक्षणं पूर्वम्, अनन्तरं षडवत्तभागस्य द्यावापृथिव्योपह्वाने समर्पणात् तद्भागं तदनन्तरं, तत इडाभागभक्षणम् ।

प्रथमावत्तं षडवत्तभागं प्राश्य, आचम्य, द्वितीयावत्तं षडवत्तभागम् "ॐ उपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात् स्वाहा" ( य० सं० २।११ ) इति मन्त्रेण प्राश्य इडाभागं भक्षयेत् । तत आचामेत् ।

ब्रह्मादयोऽपि सर्वे प्रथमं चतुर्धाकरणभागं प्राश्य इडाभागं प्राश्नीयुः । यजमानश्च इडायामवत्तस्य पञ्चमं भागं प्राश्नीयात् । ततः सर्वे यजमानसहिता ऋत्विजः आचम्य, यथागतं प्रत्यागत्य, वेदेः पश्चादुपविश्य "ॐ सुमित्रियान आप ओषधयः सन्तु" ( य० सं० ३६।२३ ) इति मन्त्रेण ब्रह्मादिक्रमेण पवित्राभ्यां मार्जयेयुः । (पवित्रयोरेव मार्जनकरणत्वमिति कर्कभाष्ये स्पष्टम्)।

ततोऽध्वर्युः "ॐ यजमानस्य प्राणापानौ पातम्" ( का० श्रौ० ३।४।२२ ) इति मन्त्रेण पवित्रे प्रस्तरे निदध्यात् । ( अत्र वा प्राशित्रभक्षणं ब्रह्मणः ) ।

ततः षडवत्तादिभागत्रयान्तर्गतं पूर्वनिर्दिष्टं ब्रह्मभागं ध्रुवापुष्करभागस्य उपरि स्थापितम् आहवनीयस्य पूर्वेण ब्रह्मणे, ध्रुवाग्रस्य पुरस्ताद्बर्हिषि स्थापितं यजमानभागम् अपरेण गार्हपत्यं यजमानाय च समर्पयेत् ।

( प्रोषिते यजमाने यजमानभागः ध्रुवायामेव अवस्थितो भवति । ब्रह्मा च तं भागं प्रतिगृह्य प्राशित्रपात्रे निदधाति । भक्षणकाले एव यजमानभागो हूयते । )

१. षडवत्तभागसहचरितो ध्रुवापुष्करभागोपरिस्थापितो ब्रह्मभागस्तु अद्यापि न समर्पित इति न तस्यात्र भक्षणम् किन्तु चतुर्धाकरणभागेडाभागयोरेव ब्रह्मणाऽत्र भक्षणम् ।

२. षडवत्तभाग[illegible]हचरितयजमानभागस्य च भक्षणं "संयज्ञपतिराशिषेति भागं प्राश्नाति" ( का० श्रौ० ३।८।२१ ) इति सूत्रेण इष्ट्यन्ते विहितमिति यजमानेन इडाभागस्यैवात्र भक्षणम् ।

प्राशित्रम्, इडा, षडवत्तादिभागाश्च यावदुक्तेऽपि प्रवर्तन्ते, द्रव्यसंस्कारत्वात् ।



ततो यजमानः स्वभागं बर्हिष्येव नि[illegible]न्ते च भक्षयेत् , तत्रैव भक्षणविधानात् । [illegible]ग-सहचरितं स्वभागं तदैव भक्षयेत् , कालात्[illegible]

ततोऽध्वर्युः अन्वाहार्यं दक्षिणाग्नौ [illegible]भि-घार्य, उदक् उद्वास्य, गार्हपत्यद्क्षिणात्[illegible]यङ् नीत्वा, दक्षिणाग्रेर्दक्षिणेन ब्रह्मयजमानाव[illegible]रान्तस्य पूर्वेण प्रणीतोत्करावन्तरेण च हृत्वा, तेषां निधाय, उपविश्य—

"ॐ प्रजापतेर्भागोस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्युदान-पाह्यूर्गस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिन् लोक इह च" ( का० श्रौ० ३।४।२७ ) इति मन्त्रेण आलभेत ।

ततो यजमानः अस्याः पौर्णमासेष्टेः ( दर्शेष्टेः ) समृद्ध्यर्थम् इमाम् अन्वाहार्यदक्षिणां ब्रह्मादिभ्य ऋत्विग्भ्यः समविभागेनाहं संप्रददे इति सङ्कल्प्य 'ब्रह्मन् यस्ते भागः स प्रतिगृह्यताम् , होतः यस्ते भागः प्रतिगृह्यताम् , अध्वर्यो यस्ते भागः स प्रतिगृह्यताम् अग्नीध्रस्ते भागः स प्रतिगृह्यताम्' इत्येवं समर्पयेत् ।

ब्रह्मादयश्च "ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु" ( पा० गृ० ३।१५।२१ ) इति गृह्यसूत्रोक्तेन मन्त्रेण

१. अस्मिन्मन्त्रे ऊर्गसीति पठ्यमानं नवा[illegible]दक्षिणायां विपरिणम्यते । "ऊर्जं मयि धेहि" इति तु न विपरिणम्यते, दीयमानाद्भक्षमाणस्य [illegible]पत्र [illegible]काङ्क्ष्यमाणत्वात् । अभिघारणं तु गवादौ न प्रवर्तते, असंभवात् । भुज्यमानौ-दनादिनिष्ठस्वादुतासंपत्तिर्हि अभिघारणस्य प्रयोजनम् । [illegible] हरणं गोदक्षिणाया न भवति, विरोधात् । [illegible] संभवम् ।

२. आलम्भस्याध्वर्युकर्तृकत्वेन मन्त्रपाठेऽपि तस्यैव । [illegible] यजमानगतैव । "यां वै कांच यज्ञऋत्विज आशिषमाशासते यजमानस्यैव सा" इति लिङ्गात् । एवं च मन्त्रे लक्षणया यजमानाभिधानमाश्रयणीयम् ।

प्रतिगृह्णीयुः। तमन्वाहार्यं पात्र्यादिस्थमवशिष्टं हविश्च उदग् उद्वासयेत्।

ततोऽध्वर्युः पूर्वमाहवनीयादेवोद्धृते उल्मुके आहवनीये एवानुयाजार्थं प्रक्षिप्य अग्रादग्रे घमकाष्ठान्निर्गतानाम् अनुयाजार्थं परिशेषितां समिधं समिदाधानार्थं गृहीत्वा 'ब्रह्मन् प्रस्थास्यामि' इति ब्रह्माणम् आपृच्छ्य "समिधमाधायाग्निमग्नीत् संमृड्ढि" इति आग्नीध्रं प्रेषयेत्। ( अवभृथेष्टौ अप इति विपरिणामः )।

ततो ब्रह्मा "ॐ "उपांशु" एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे। तेन यज्ञमव तेन यज्ञपतिं तेन मामव। मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु। विश्वे देवास इह मादयन्ताम्" ( य० सं० २।१२-१३ ) इति जपित्वा "ॐ प्रतिष्ठ" इत्युच्चैः पठेत्।

ततोऽग्नीदध्वर्युसमर्पितां समिधं गृहीत्वा आहवनीये आदध्यात्। ततः "ॐ एषा ते अग्ने समित्तया वर्धस्व चाच प्यायस्व। वर्धिषीमहि च वयमाच प्यासिषीमहि" ( य० सं० २।१४ ) इति मन्त्रेण होता अनुमन्त्रयेत्।

ततोऽग्नीत् उत्तरपार्श्वे स्थित एव "ॐ अग्ने वाजजिद् वाजं त्वा ससृवाꣳसं वाजजितꣳ संमार्ज्मि" ( य० सं० २।१४ ) इति मन्त्रेण अनुपरिधि दक्षिणपश्चिमोत्तरपार्श्वेषु क्रमेण अग्निं सकृत् सकृत् प्रतिदिशं मन्त्रावृत्त्या संमृज्य, उपरिष्टात्तूष्णीं सकृत् संमृज्यात्।

ततोऽध्वर्युः ब्रह्मणा 'प्रतिष्ठ' इत्यनुज्ञातः किञ्चित् स्थापयित्वा, औपभृतं शेषमाज्यं जुह्वां समानीय, पूर्ववत् स्रुचावादाय, सव्येनातिक्रम्य, यजति देशं गत्वा, 'ओ३ श्रा३वय' इति अग्नीधं प्रेष्य,



अस्तु श्रौ३षट्' इति तेनोक्ते, 'देवान् यज' इति होतारं प्रेषयेत्। ततो जुहूं प्राचीमवनाये अवतिष्ठेत।

होता च "ॐ देवं बर्हिर्वसुवने वसुधेयस्य वेतु३ वौ३षट्" इति ( का० हौ० प० १।७ ) याज्यां पठेत्।

ततोऽध्वर्युः वषट्कारान्ते प्रदीप्तायाः समिधः पूर्वार्धे जुहूस्थाज्यतृतीयभागं प्रक्षन् जुहुयात्।

"ॐ इदं देवाय बर्हिषे न मम" इति यजमानस्त्यागं कुर्यात्।

अध्वर्युः पुनर्जुहूमघृत्य 'ओ३ श्रा३वय' इति अग्नीधं प्रेष्य, "अस्तु श्रौ३षट्" इति तेनोक्ते, "देवान्यज" इति होतारं प्रेष्य, जुहूमवनाये अवस्थाय—

"ॐ देवो नराशꣳसो वसुवने वसुधेयस्य वेतु३ वौ३षट् इति तेन याज्यायां ( का० हौ० प० १।७ ) पठितायां—पूर्वहोमस्थानात्प्रतीच्यां समिधि उपरि मध्यभागे जुहूस्थाज्यार्धं जुहुयात्।

"ॐ इदं देवाय नराशꣳसाय न मम" इति यजमानस्त्यागं कुर्यात्।

अध्वर्युः पुनर्जुहूमघृत्य "ओ३श्रा३वय" इति अग्नीधं प्रेष्य, 'अस्तु श्रौ३षट्' इति तेनोक्ते, 'देवान् यज' इति होतारं प्रेष्य, जुहूमवनाये अवस्थाय—

---

१. अनुयाजमन्त्रार्थः देवं बर्हिरिति। देवं द्योतनशीलं बर्हिर्नामकं यज्ञाङ्गभूतं यत्, वसुधेयस्य वस्वर्थं यत् अग्नौ आधेयम् आज्यं तत्, वसुवने = वसूनां धनस्य वननं भजनं वसुव तस्मै वसुवने यजमानस्य धनप्राप्त्यर्थं वेतु भक्षयतु।

२. नराशंसनामकोऽपि अग्निदेवः यजमानस्य धनप्रापणार्थम् आज्यं भक्षयतु।

"ॐ देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्मा ऽऽयजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड्याँ अपिप्रेर्ये ते होत्रे अमत्सत । ताँ ससनुषीँ होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमँ स्विष्टकृच्चाग्ने होताऽभूर्वसुवने वसुधेयस्य नमोवाके वीहि३ वौ३षट्" ( का० हौ० प० १।७ ) इति तेन याज्यायां पठितायां द्वितीयवारहोमस्थानात् प्रतीच्यां समिध उपरि मूलभागे जुहुयात् ।

"ॐ इदं देवायाग्नये स्विष्टकृते न मम" इति यजमानस्त्यागं कुर्यात् ।

(ध्रुवस्थितेनैवा... ना अनुयाजाः प्रत्यक्संस्थाः होतव्याः)।

ततो यजतिदेशाद्दक्षिणेन पादेन प्रत्यागत्य, उत्तरत उपविश्य, औपभृतं सर्वं शेषं जुह्वां समानीय "ॐ देवेभ्यः स्वाहा' इति प्राक्संस्थामाहुतिम् आसीन एव जुहुयात् ।

ॐ इदं देवेभ्यो न मम" इति यजमानस्त्यागं कुर्यात् । ततोऽध्वर्युः हविस्थानमागत्य स्रुचौ स्वस्थाने नि दध्यात् ।

ततोऽध्वर्युः सव्येन पाणिना वेदं गृहीत्वा दक्षिणेन पाणिना

१. स्विष्टकृन्नामकोऽग्निः सुद्रविणाः शोभनधनः, मन्द्रो हर्षणशीलः, कविर्विद्वान् , सत्यमन्मा सत्यमननः, आयजी शास्त्रीयमर्यादया यष्टा, होता देवानामाह्वाता, होतुर्होतुरायजीयान् लोके यो यो होता तस्मात्सर्वस्मात् अतिशयेन शास्त्रीयमर्यादाऽनुल्लङ्घनेन यष्टा एतादृशः हे अग्ने यान् देवान् अयाट् इष्टवानसि, याँश्च देवानपिप्रेः प्रीणि... ते तव होत्रे होतृकार्ये अमत्सत ... ने अमाद्यन् , दिवि स्थितेषु ... सुससनुषीं हविर्दानवतीं देवगमां देवानेव ... नां होत्रां होतृक्रियाम्, इमम् अस्मदीयं यज्ञम् एरय आभिमुख्येन प्रापय । अस्मदीये यज्ञे सर्वदेवतुष्टिकरीं होतृक्रियां त्वमनुतिष्ठेत्यर्थः । हे अग्ने त्वं स्विष्टकृद्धोता चाभूः, यदस्माभिरिष्टं तच्छोभनं त्वया कृतं तादृशस्सन् होमस्य कर्ताऽभूः, अतो नमोवाके यजमानस्य नमस्कारोक्तौ सत्यां, वसुवने धनस्य संभजनाय वसुधेयस्य अग्नौ आधीयमानम् इदमाज्यं वीहि भक्षय ।



उत्तानेन जुहूम् प्रस्तरात्प्राचीम् "ॐ अग्नेरग्नीषोमयोरुज्जि... मनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहा...' ( का० श्रौ० ३।५।१७–१८–१९ ) इति मन्त्रेण प्रेरयेत् ।

"ॐ अग्निरग्नीषोमौ तमपनुदन्तु यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामि" इति मन्त्रेण सव्यहस्तेन अधोमुखेन प्राङ्मुखीमेवोपभृतं प्रतीचीं दिशं प्रेरयेत् दक्षिणेन पाणिना वेदोपग्रहपूर्वकम् ।

ततोऽध्वर्युः जुहूमभ्युक्ष्य, तत्स्थेनाज्येन पश्चिमदक्षिणोत्तरपरिधीन् क्रमेण "ॐ वसुभ्यस्त्वा" ( अनक्ति ) "ॐ रुद्रेभ्यस्त्वा" ( अनक्ति ) "ॐ आदित्येभ्यस्त्वा" ( अनक्ति ) इति मन्त्रैरञ्ज्यात् ।

( नात्रोदकस्पर्शः । रुद्रस्य अत्र संप्रदानचतुर्थ्यादिनिर्दिष्टत्वाभावाद् देवतात्वाभावेन मन्त्रस्य रौद्रत्वाभावादिति कर्कः )।

ततो जुहूं प्रस्तरादुत्तरतः सादयेत् ।

ततः प्रथमं परिधिं गृहीत्वा 'ओ३ श्रा३वय' इति अग्नीधं प्रेष्य 'अस्तु श्रौ३षट्' इति तेनोक्ते, "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि" इति होतारं प्रेष्य "ॐ संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवताम्" ( य० मं० २।१६ ) इति मन्त्रेण प्रस्तरमादाय, विधृती आहवनीये प्रक्षिप्य, प्रस्तरस्याग्रम् "ॐ व्यन्तु वयोऽक्तं रिहाणाः" ( य० मं० २।१६ ) इति मन्त्रेण जुह्वामङ्क्त्वा, तस्य मध्यं तेनैव मन्त्रेण उपभृति अङ्क्त्वा,

१. दर्शे अग्निरग्नीषोमयोरित्यस्य स्थाने "इन्द्राग्न्योः" इति वाच्यम । एवमुत्तरत्र "अग्नीषोमौ" इत्यत्र "इन्द्राग्नी" इति वाच्यम् ।

२. दैव्या होतारः परिधयोऽग्नयः, भद्रवाच्याय शुभवदनाय, इषिताः ... स्वयं युक्ताः, मानुषो होता, सूक्तवाकाय प्रेषितः 'सूक्ता=सूक्तानि ब्रूहि' इत्येवम् ।

३. उपभृद्दत्वाभावेऽपि प्रस्तरः स्याक्ष्याऽप्येनाज्यते एव । संस्कारत्वात् ।

तस्य मूलं तेनैव मन्त्रेण ध्रुवायामक्त्वा, "ॐ मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह" ( य० सं० २।१६ ) इति मन्त्रेण प्रस्तरं स्रुचोर्दक्षिणेनानीय, भूमिलग्नमिव होमार्थमाहवनीयं प्रति नयेत्।

होता च—

'ॐ इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत

---

१. सूक्तवाकमन्त्रार्थः इदं द्यावापृथिवीति। हे द्यावापृथिव्यौ, इदम् ईदृशं, भद्रं कल्याणमभूत्। ईदृशमेव विशदयति। ते वयं सूक्तवाकमार्ध्म = 'अग्निरुरयं यजमानः मम्यगनेन हविर्दत्तम्' इत्यादिवाक्यानि सूक्तानि, तेषां देवैर्मनुष्यैर्वा वचनं वाकः, तद्यथा भवति तथा समृद्धिं गताः स्म। अथवा 'अग्निरिदं हविरजुषत, अवीवृधत, महो ज्यायोऽकृत' इत्यादीनि सूक्तानि। तेषां वचनम् अत्र यथा भवति तथा वयमृद्धिंगताः। किंच 'नमो देवेभ्यः' इत्युक्तिर्नमोवाकः, स यथा भवति तथा प्राप्ताः। हे अग्ने, त्वया सूक्तोच्यं 'यजमानः समृद्धं हविर्दत्तवान्' इत्येतादृशं सूक्तं वयम् ऋद्धिं वक्ष्यं, तेन वयम् ऋध्यास्म समृद्धिं प्राप्ता भूयास्म। यतः त्वं दिवस्पृथिव्योः उपश्रुत्योः अवस्थितो भूत्वा सूक्तवागसि सूक्तं वक्तुं क्षमोऽसि। हे यजमान, ते=तव, अस्मिन्यज्ञे, द्यावापृथिवी द्यावापृथिव्यौ, ओमन्वती ओमन्वत्यौ रक्षणवत्यौ स्ताम्। ते एव विशिनष्टि। शङ्गवी सुखस्य प्रापयित्र्यौ, जीवदानू वृष्ट्यादिद्वारेण जीवनप्रदात्र्यौ, अत्रस्नू भयरहिते, अप्रवेदे अस्मदीयानां दोषाणाम् अकथयित्र्यौ, उरुगव्यूती प्रभूततृणोदकयुक्तत्वेन विस्तीर्णगोप्रचारेण च, अभयंकृतौ अस्माकम् अभयकर्त्र्यौ, वृष्टिद्यावा वृष्टेः प्रकाशयित्र्यौ, रीत्यापा रीतेः सन्मार्गवृत्तिप्रकारस्य प्रापयित्र्यौ, शम्भुवौ रोगाद्युपशान्तेः प्रापयित्र्यौ, मयोभुवौ अशनादिसुखस्य प्रापयित्र्यौ, युवयोर्मध्ये द्यौरियम् ऊर्जस्वती, वृष्टिरूपरसवती पृथ्वी च पयस्वती तृणोदकद्वारा बहुलक्षीरादियुक्ता, तथा इयं द्यौः सूपचरणा देवताधिवासस्थानत्वेन सुखोपचरितव्या इयं पृथ्वी स्वधिचरणा सुखेन आश्रयितुं शक्या। तयोः द्यावापृथिव्योः आविदि आज्ञायां सत्याम्—

आज्यभागदेवोऽयमग्निः इदं हविरजुषत असेवत, सेवित्वा च अवीवृधत यजमानं वर्धितवान्, तस्य यजमानस्य ज्यायोऽधिकं महः तेजः अकृत अकृतवान्। एवं सोमादिषु स्विष्टकृदग्निपर्यन्तेषु योज्यम्। देवताक्रमश्चावाहननिगदवत्। "निगमसमावाहने उत्तमे प्रयाजे स्विष्टकृति सूक्तवाके च" ( का० हौ० प० ११३ ) इति सूत्रात् आवाहनादिष्वग्निएवे निगमनं विधीयते। निगमनं च इज्यमानदेवताभिधानम्। तत्र आवाहने उत्तमे प्रयाजे च द्वितीयान्तेन स्विष्टकृति षष्ठ्यन्तेन



नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वꣳ सूक्तवाग सि उप श्रुती दिवस्पृथिव्योरोमन्वती ते ऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताꣳ शङ्गवी जीवदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ। वृष्टिद्यावा रीत्याप शंभुवौ मयोभुवा ऊर्जस्वती च पयस्वती च सूपचरणा च स्वधिचरणा च तयोराविदि। अग्निरिदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृत। सोम इदꣳ हविरजुषतावीवृधत महो

---

सूक्तवाके तु प्रथमान्तेनेति विशेषः। इज्यमानदेवतानां प्रक्षेपश्च आज्यभागस्विष्टकृदन्तरे कार्यः। "आज्यभागस्विष्टकृदन्तरेऽभीज्यानामावापः" ( का० हौ० प० ११३ ) इति कातीयपरिशिष्टसूत्रात्। तत्र होत्रेण इत्यस्य होमनिमित्तेनेत्यर्थः। होमस्य स्विष्टकृत्त्वं कर्तुमुशनोऽग्निरिति यावत्।

अस्यां स्तोत्रपाठपूर्विकायां होत्रायां प्रस्तरणप्रहरणरूपायां होमक्रियायां देवंगमायां देवान् प्राप्नुवत्यां सत्याम् ऋध्येत् ऋध्नोतु यजमानः समृद्धिं प्राप्नोतु। असौ विष्ण्वादिशर्मा यजमानः। सजातवनस्यां समानजातीयैः स                    तस्य आत्मसम्बन्धित्वेन इष्ट्वा सजातवनस्या, ताम्। उ                    ज्या कालान्तरभाविनीयमिष्टिः, ताम्। हविष्करणं प्रभूतसोमयागादिरूपम्। दिव्यं धाम स्वर्गादिरूपम्। यदात्मवंमात्मनोऽनेन हविषा प्रस्तरास्येन यजमानः फलमाशास्ते तदश्यात् तत्फलम् भुञ्जीताम्। तच्च फलम् ऋध्यात् = अस्य यजमानस्य समृद्धं भवतु। तत्सर्वम् अस्मै यजमानायाग्न्यादयो देवता रासन्तां साधयन्ताम्। तत्फलम् अग्निर्देवो देवेभ्यः सर्वेभ्यः आनीय वनुतां यजमानं तद्भाजिनं करोतु, वयं च होत्रादयो मानुषाः सन्तोऽग्नेः, प्रसादात्स्वरभावितफलं मनुष्येभ्य आनयाम इति शेषः। इष्टं च वित्तं चेत्यस्यायमर्थः = यमेतं यज्ञमस्विन्यजमाना ऐषिषुः प्रार्थितवन्तः तम् अविदन् लब्धवन्त इति। स                    यते यतेनेति। किंच ते द्यावापृथिवी उभे अपि नोऽस्मान् अंहसः पापात्फलप्रतिबन्धकात् पातां रक्षताम्। इहास्मिन्कर्मणि, वामस्य कमनीयस्य धनस्य, गतिः प्राप्तिरस्तु। इदं च हविः, देवैः स्वीक्रियतामिति शेषः। नमो देवेभ्यः = सर्वेभ्यो देवेभ्यो नमोऽस्तु।

अत्र "तस्माद्ब्राह्मणो सूत्रमीः कुर्यात्" ( श० ब्रा० कां० १।९।१।१८ ) इति ब्राह्मणे आश्वलायनाद्यधीतानामधिकाविशां प्रतिषेधात् कात्यायनानामाश्वलायनादिहौत्रानादरः स्पष्टमेव गम्यते इति सुधियो विदाङ्कुर्वन्तु।

ज्यायोऽक्रत। अग्निरिदꣳ हविरजुषताऽवीवृधत महो ज्यायोऽक्रत।

( उपांशु ) अग्नीषोमौ ( उच्चैः ) इदꣳ हविः ( उपांशु ) अजुषेतामवीवृधेताम् ( उच्चैः ) महो ज्यायः ( उपांशु ) अक्राताम्।

( उच्चैः ) अग्नीषोमाविदꣳ हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्। देवा आज्यपा आज्यमजुषन्ता-वीवृधन्त महो ज्यायोऽक्रत। अग्निर्होत्रेणेदꣳ हविरजुष-ताऽवीवृधत महो ज्यायोऽक्रत।

अस्यामृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानः अमुकशर्मा। उत्तरां देवयज्यामाशास्ते भूयो हविष्करण-माशास्ते सजातवनस्यामाशास्ते दिव्यं धामाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात् तदृध्यात् तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परिमा-नुषाः। इष्टं च वित्तं चोभे चैनं द्यावापृथिवी अꣳहस-स्पातामिह गतिर्वामस्येदं च नमो देवेभ्यः" ( का० हौ० प० १।८ ) इति सूक्तवाकं पठेत्।

अध्वर्युः प्रस्तरस्यैकं तृणं परिशेष्य सूक्तवाकान्ते प्रस्तरं प्रागग्रम् आहवनीये प्रक्षिपेत्[2]।

१. दर्शे (उपांशु) विष्णुः (उच्चैः) इदꣳ हविः (उपांशु) अजुषताऽवीवृधत (उच्चैः) महो ज्यायः (उपांशु) अक्रतेति प्रयोगः। "उपांशु काम्यदेवतायाज्यानुवाक्या, अजुषताऽवीवृधताक्रतेति च, उच्चैरन्यत्, उपांशुप्रयोगिणां चैवम्" ( का० हौ० प० १।१३ ) इति सूत्रेण उपांशुप्रयोगाणां याज्यानुवाक्ययोः सूक्तवाकस्थानाम् अजुषत अवीवृधत अक्रत इति शब्दानां च उपांशुप्रयोगस्य, अन्येषां च उच्चैः प्रयोगस्य विधानात्तथा प्रयोगोल्लेख इति बोध्यम्।

२. सूक्तवाकप्रस्तरप्रहरणयोः कालार्थः संयोगो, नाङ्गाङ्गिलक्षणः। प्रस्तरस्य अनुधारणार्थतया सूक्तवाकस्य चेष्टदेवतासंकीर्तनार्थतया उभयोरपि परार्थत्वेन परस्परमङ्गाङ्गिलक्षणसंबन्धस्य इध्मप्रक्षेपमाभिधेयानुवचनयोरिवासंभवात्। ततश्च



ततोऽध्वर्युः हुतं प्रस्तरं हस्ताङ्गुलिभिः प्रदीप्ताग्निप्रदेशे प्रेरयेत्।

ततोऽग्नीत् 'अनुप्रहर' इति अध्वर्युमुच्चैरध्येषयेत्।

ततोऽध्वर्युः प्रस्तराद् गृहीतं तृणमग्नावनुप्रहृत्य "ॐ चक्षु-ष्पा अग्नेऽसि चक्षुर्मे पाहि" ( य० सं० २।१६ ) इति आत्मानम् आलभ्य अप उपस्पृशेत्।

ततोऽग्नीत् "संवदस्व" इति ब्रूयात् ( शंयुवाकप्रैषार्थं संवादं कुर्वित्यर्थः )।

ततोऽध्वर्युः "अगानग्नीत्" इति ( प्रस्तरशरीरो यजमानः किं स्वर्गमगमत् इत्यर्थः। किं प्रस्तरो दग्ध इति यावत् )।

ततोऽग्नीत् "अगन्" इति ( अगमत् दग्धः प्रस्तर इत्यर्थः )।

ततोऽध्वर्युः "श्रावय" इति ( होतारमाकर्णयेत्यर्थः )।

ततोऽग्नीत् "श्रौषट्" इति ( शृणोत्वयं होतेत्यर्थः )।

ततोऽध्वर्युः "स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि" इति होतारं प्रेषयेत् ( दैवहोतृभ्यः परिध्यग्निरूपेभ्यः स्वगा = स्वस्थानगमनमस्तु मानुषेभ्यः मानुषाय होत्रे स्वस्तिर-विनाशोऽस्तु इत्यर्थः )।

होता च—

तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये

आतिथ्यादौ प्रस्तरप्रहरणाभावेऽपि सूक्तवाकः प्रयुज्यत एवेति कर्मेदं न विस्तरः। अतएवात्र यजमानकर्तृकत्यागो नोल्लिखितः। होतृत्वाभावात् इति बोध्यम्।

१. शंयुवाकमन्त्रार्थः तच्छंयोरावृणीमहे इति। ततः [illegible] फलं शंयोर्बार्हस्पत्यात् आवृणीमहे [illegible]महे। तदेवमेवोच्यते। यज्ञाय गातुं = यज्ञस्य देवान् प्रति गमनं, यज्ञपतये गातुं = यजमानस्य देवान् प्रति गमनं च आवृणीमहे। अत्र यजमानस्य आयुषः प्राक् देवान्प्रति गमनं न प्रार्थनाविषयः किंतु प्रस्तरशरीरेणैव तद्गमनं प्रार्थ्यत इति ध्वनयन्नाह दैवीति। नोऽस्माकं दैवी

दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजꣳ शन्नो अस्तु द्विपदे शं चतुष्पदे" ( का० हौ० प० ११९ ) इति शंयुवाकं पठित्वा "अनया" ( का.हौ.प.११९ ) इतिमन्त्रेण प्रादेशं वेदिश्रोणौ निदध्यात्।

( शंयुवाकस्य अर्थकर्मत्वाद्यावदुक्ते निवर्तते। तन्निवृत्तौ च संवदस्वेत्यादीनां निवृत्तिः। तेषां तदङ्गत्वात् )।

ततोऽध्वर्युः पश्चिमं ( प्रथमं ) परिधिम्—

"ॐ यं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः। तन्त एतमनुजोषं भराम्येष नेत्त्वदपचेतयातै" ( य० सं० २।१७ ) इति मन्त्रेण हस्तेनैव आहवनीये अनुप्रहृत्य दक्षिणोत्तरौ परिधी "ॐ अग्नेः प्रियं पाथोऽपीतम्" ( य० सं० २।१७ ) इत्यनेन युगपत् तथैव अनुप्रहरेत्। ( परिधिप्रहरणमन्त्रयोरन्य-भिधायकत्वात् अवभृथे विपरिणामः। परिधिप्रहरणस्य च प्रति-पत्तिकर्मत्वात् यावदुक्तान्तापच्छिन्नयोरपि प्रवृत्तिः )।

ततो जुहूपभृतावादाय "ॐ संस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः। इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वꣳस्वाहा वाट्" ( य० सं० २।१८ ) इति मन्त्रेण उभाभ्यां स्रुग्भ्यां संस्रवान् (हविर्लेपान्) उत्तरत उपविश्य जुहुयात् ( संस्रवहोमस्य प्रतिपत्त्यर्थकर्मत्वादन्तापच्छिन्नेऽपि प्रवृत्तिः )।

"ॐ इदं विश्वेभ्यो देवेभ्यो न मम" इति यजमानस्त्यागं कुर्यात्।

स्वस्तिः देवनिमित्तं विघ्नोपशमनं, मानुषेभ्यः स्वस्तिः मनुष्यनिमित्तकं विघ्नोपशमनं चास्तु। भेषजं सर्वपापानामौषधमिदं कर्म, ऊर्ध्वं जिगातु = अग्निष्ठेन समाप्तिं प्राप्नोतु। सोऽस्माकं, द्विपदे मनुष्याय, चतुष्पदे पशवे च, शं सुखमस्तु। इदा-नीमेव देवाश्च्यन्ति गमनप्रार्थने हि एतत्प्रार्थनं नोपपद्येतेति भावः।



ततोऽध्वर्युः वेद्या उत्तरांसे उदगग्रं स्फ्यं निधाय तत्र प्रागग्रे जुहूपभृतौ—

"ॐ घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम्" (य० सं० २।१९) इति मन्त्रेण निदध्यात्।

ततः "ॐ यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व" (य० सं० २।१९) इति मन्त्रेण स्फ्योपग्रहपूर्वकं वेदिमालभेत।

ततो होता वेदमादाय, अध्वर्युः जुहूं स्रुवं च आदाय, अग्नीदाज्यस्थालीमादाय, आग्नीध्रप्रथमाः प्रत्यङ्मुखाः पत्नीसंया-जार्थं गार्हपत्यमुपगम्य, गार्हपत्यस्य पश्चिमे भागे ऊर्ध्वज्ञव आसीरन्। तत्र दक्षिणतः अध्वर्युः, उत्तरत आग्नीध्रः, तयोर्मध्ये होता, उपविशेत्। तत्रापि अध्वर्युः गार्हपत्यदक्षिणाग्न्यो-रन्तरेण गत्वा, गार्हपत्यस्य दक्षिणतः पत्न्या अग्रे इशानाभिमुख उपविशेत, गार्हपत्यस्य पश्चात् होता उपविशेत् तस्योत्तरतः दक्षिणाभिमुखो ऽग्नीदुपविशेत्। ( पत्नीसंयाजाख्यं कर्म च सर्वमुपांशु भवति। "उपांꣳशु चरन्ति, चरणशब्दे सर्वम्" ( का० श्रौ० ३।७।५-६ ) इति सूत्राभ्यां ( तथैव विधानात्)।

ततो ऽध्वर्युः वेदं गृहीत्वा दक्षिणं जान्वाच्य 'सोमाया-नुब्रूहि" इति होतारं प्रेष्य आज्यग्रहणादिकं कुर्यात्।

ततो होता—

"[1]ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्।

१. पत्नीसंयाजमन्त्रार्थः। तत्रादौ सोमदेवत्यापुरोऽनुवाक्यामन्त्रार्थः आप्याय-स्वेति। हे सोम, विश्वतः सर्वस्मात्, वृष्ण्यं वीर्यं सर्वभूतोत्पादिकशक्तिं, ते तव, समेतु समागच्छतु तेन च वीर्येण, त्वम् आप्यायस्व, सर्वतो वर्धस्व। किञ्च वाजस्याशनस्य, सङ्गथे सङ्ग्रामाय भवा = भव, अन्नमस्मासु सङ्गमयेत्यर्थः।

श्रवा त्वाजस्य सङ्क्थो३म्" ( य० सं० १२।११२ ) इति पुरोऽनुवाक्यां पठेत्।

अध्वर्युश्च स्रुवेण आज्यस्थाल्याश्चतुर्गृहीतमाज्यं जुह्वां गृहीत्वा, 'ओ३ श्रा३वय' इति अग्नीधं प्रेष्य, 'अस्तु श्रौ३षट्' इति अग्नीधा उक्ते, 'सोमं यज' इति होतारं प्रेष्य,—

"ॐ ये३ यजामहे सोमꣳ सन्ते पयाꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व३ वौ३षट्" ( य० सं० १२।११३ ) इति होत्रा याज्यायां पठितायाम्,

"ॐ इदꣳ सोमाय न मम" इति यजमानेन त्यागे कृते सति गार्हपत्ये जुहुयात्।

ततः "त्वष्ट्रे ऽनुब्रूहि" इति होतारं प्रेषयेत्।

होता च—

"ॐ इह त्वष्टारमग्र्यं विश्वरूपमुपह्वये। अस्माकमस्तु केवलो३म्" ( का० हौ० प० १।१० ) इति पुरोऽनुवाक्यां पठेत्।

१. सोमदेवतायाज्यामन्त्रार्थः सन्ते पयांसीति। हे सोम, पयांसि यानि त्वा रसाः, ते तव अभिमातिषाहः = अभिमातिं पाप्मानं सहते अभिभवन्तीति अभिमातिषाट् तस्याभिमातिषाहः। छान्दसं रूपम्। संयन्तु संगच्छन्तु। उ = अपि च वाजा = अन्नानि संयन्तु। वृष्ण्यानि = रेतांसि च संयन्तु। हे सोम, पयोऽन्नवृष्ण्यैः आप्यायमानो वर्धमानः सन् त्वम् अमृताय अमरणधर्मित्वाय ( पुत्रादिवृद्धयै ), यजमानस्य भवति शेषः। किञ्च दिवि द्युलोके, उत्तमानि उत्कृष्टानि, श्रवांसि अन्नानि आहुतिपरिणामजनितानि, धिष्व धारय संपादय।

२. त्वष्टुः पुरोऽनुवाक्यामन्त्रार्थः इह त्वष्टारमिति। इह अस्मिन्कर्मणि, अग्र्यं मुख्यं, विश्वरूपं विश्वानि रूपाणि गर्भे विकर्तुं योग्यानि यस्यासौ विश्वरूपः तम्, त्वष्टारं देवम्, उपह्वये आह्वयामि। स च त्वष्टा अस्माकं केवलोऽस्तु असाधारणत्वेन पालकोऽस्तु। ( ऋ० सं० १।१।२५ )।



अध्वर्युश्च स्रुवेण आज्यस्थाल्याश्चतुर्गृहीतमाज्यं जुह्वां गृहीत्वा 'ओ३ श्रा३वय' इति अग्नीधं प्रेष्य, 'अस्तु श्रौ३षट्' इति अग्नीधोक्ते, 'त्वष्टारं यज' इति होतारं प्रेष्य—

"ॐ ये३ यजामहे त्वष्टारं तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व।

यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट्" ( का० हौ० प० १।१० ) इति याज्यायां होत्रा पठितायाम्—

"ॐ इदं त्वष्ट्रे न मम" इति यजमानेन त्यागे कृते जुहुयात्।

ततोऽन्तर्धानकटं गार्हपत्यस्य पुरस्ताद्धारयित्वा पत्न्यन्वारब्धोऽध्वर्युः 'देवानां पत्नीभ्योऽनुब्रू३हि' इति होतारं प्रेषयेत्।

ततो होता—

"ॐ देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तु-

१. त्वष्टुर्याज्यामन्त्रार्थः—तन्नस्तुरीपमिति। हे त्वष्टः देव, तुरीपं तूर्णं प्राप्नोतीति तुरीपम्, अध = अपि च पोषयित्नु पोषयितृ तत् धनं नोऽस्मभ्यं विष्यस्व विशेषेण समर्पय। त्वं च रराणः दानशीलः। यतो यस्माद्धनादस्माभिर्लब्धात् वीरः शूरः पुत्रो जायते। शूरत्वं विशदयति 'कर्मण्य' इत्यादिना कर्मण्यो लौकिके वैदिके च कर्मणि कुशलः, सुदक्षः सम्यगुत्साही शीघ्रकारी, युक्तग्रावा=युक्ताः सोमाभिषवार्थं प्रयुक्ताः ग्रावाणो यस्यासौ युक्तग्रावा सर्वदा सोमयागस्यानुष्ठाता, देवकामः देवैरिष्यमाणः सेवकोऽस्माकं भूयादिति काम्यमानः देवान् सेवितुं स्वयं कामयमानो वा। ( ऋ० सं० २।८।२३ )।

२. देवपत्नीपुरोऽनुवाक्यामन्त्रार्थः—देवानां पत्नीरिति। देवानां पत्नीः इन्द्राण्यादयो देवपत्न्यो याः सन्ति ताः, उशतीः उशत्यः, अस्मद्धितं कामयमानाः नोऽस्मान् अवन्तु रक्षन्तु। रोगापदादिनमरिष्टं वारयन्त्वित्यर्थः। किं च तुजयेऽपत्याय, वाजसातये अन्नलाभाय, नोऽस्मान् प्रावन्तु प्रकर्षेण रक्षन्तु। न केवलं दिवि स्थिता इन्द्राण्याद्याः, किन्तु याः पार्थिवासः पृथिव्यां स्थिता देवपत्न्यः, या अपि अन्याः अपां व्रते वृष्ट्युदकस्थानस्थेनोपलक्षितेऽन्तरिक्षे वर्तन्ते, ताः सर्व देवीः देव्यः, सुहवाः सुखेनाह्वातुं शक्या यूयं नोऽस्मभ्यं शर्म, सुखं, यच्छत दत्त। ( ऋ० सं० ४।२।२८ )

जयेत्त्वाजसातये। याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छतो३म्" ( का० हौ० प० १।१० ) इति पुरोऽनुवाक्यां पठेत्।

अध्वर्युश्च पूर्ववत्स्थालीत आज्यं गृहीत्वा 'ओ३ श्रा३वय' इति प्रेष्य 'अस्तु श्रौ३षट्' इति अग्नीधा उक्ते 'देवानां पत्नीर्यज' इति होतारं प्रेष्य—

"ओ३म्[1] ये यजामहे देवानां पत्नीरुतग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट्। आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनां३ वौषट्" ( का० हौ० प० १।१० ) इति होत्रा याज्यायां पठितायाम्—

"ओ३म् इदं देवानां पत्नीभ्यो न मम" इति यजमानेन त्यागे कृते जुहुयात्।

ततः अन्तर्धानकटं हस्तेनापनीय त्यक्तान्वारम्भः अध्वर्युः 'अग्नये गृहपतयेऽनुब्रू३हि' इति होतारं प्रेषयेत्। ततो होता-

"ओ३म्[2] अग्निर्होता गृहपतिः स राजा विश्वा वेद

१. देवपत्नीयाज्यामन्त्रार्थः-उत ग्ना व्यन्त्विति। उत अपि च ग्नाः छन्दोदेवता गायत्र्यादयो देवयोः देवपत्न्यः, व्यन्तु इदं हविरश्नन्तु। इन्द्रस्य पत्नीन्द्राणी, अग्नेः पत्न्यग्नायी, अश्विनोः पत्न्यश्विनी, राज्ञः सोमस्य पत्नी राट्, रुद्रस्य पत्नी रोदसी, वरुणस्य पत्नी वरुणानी, एतासामेकैका विज्ञापनमस्मदीयम् आश्रृणोतु। जनीनामिन्द्राण्यादीनां, य ऋतुः कालविशेषो भोजनार्थोचितस्तस्मिन् काले व्यन्तु अश्नन्तु। सोमत्वष्ट्रोः पुरुषयोर्युक्तयोः सतोः पश्चाद् भुञ्जतामित्यर्थः। ( ऋ० सं० ५।२।२८ )

२. गृहपतेरग्नेः पुरोऽनुवाक्यामन्त्रार्थः अग्निर्होतेति। अयमग्निः होता देवानामाह्वाता, गृहपतिः गृहाणां पालकः स च राजा दीप्यमानः, यश्चो जातवेदाः, देवतानां विश्वा विश्वानि, जनिमा जन्मानि, वेद। उत अपि च यो जातवेदाः मर्त्यानां जन्मानि वेद, सः प्रयजतां प्रकर्षेण यागं कुर्वतां मध्ये, यजिष्ठः अतिशयेन यष्टृतमः, ऋतावा यज्ञवान् च। ( ऋ० सं० ४।५।१९ )



जनिमा जातवेदाः। देवानामुत यो मर्त्यानां यजिष्ठः स प्रयजतामृतावा३ेम्" ( का० हौ० प० १।१० ) इति पुरोऽनुवाक्यां पठेत्।

अध्वर्युश्च पूर्ववत्स्थालीतः आज्यं गृहीत्वा 'ओ३ श्रा३वय' इति प्रेष्य, 'अस्तु श्रौ३षट्' इति अग्नीधा उक्ते, 'अग्निं गृहपतिं यज' इति होतारं प्रेष्य—

"ओ३म्[1] ये यजामहेऽग्निं गृहपतिं हव्यवाडग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे। सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक् संमिमीहि श्रवांसि३ वौ३षट्" इति होत्रा याज्यायां पठितायाम्—

'ओ३म् इदमग्नये गृहपतये न मम' इति यजमानेन त्यागे कृते, किञ्चित् जुह्वां शेषयन्, हुत्वा, स्रुचं भूमौ निदध्यात्।

ततः इडापात्र्यां स्रुवेण पञ्चकृत्वः स्थालीत आज्यमादाय, प्राङ्मुखो होत्रे इडां प्रदाय, इडां हस्तेन स्पृशन्नेव होतारं पत्नीं वा प्रदक्षिणीकृत्य, होतुः पुरस्तात् प्रत्यङ्मुख उपविश्य, होत्रा अर्पितामिडां प्रतिगृह्य, इडायाः सकाशात् स्रुवेणाज्यमादाय, होतुरङ्गुलिपर्वणी उत्तराधरमे स्रुवेण अञ्ज्यात्।

होता च उत्तरपर्वणोत्तरोष्ठम् अधरपर्वणाऽधरोष्ठं पूर्ववत्समन्त्रं निलिम्पेत्।

१. गृहपतेरग्नेर्याज्यामन्त्रार्थः—हव्यवाडग्निरिति। अयमग्निः, हव्यं वहतीति हव्यवाट्, अजरः जरारहितः, नः अस्माकं, पिता पालयिता, विभुः व्यापकः, विभावा विशेषेण भानशीलः, सुदृशीकः सुष्ठु दर्शनः, गृहगो योऽग्निः, स त्वम् अस्मे अस्माकम् इषः अन्नानि, सदिदीदि सम्यक् प्रयच्छ। कथंभूताः इषः। सुगार्हपत्याः शोभनगृहपतिसंबद्धभूताः। किञ्च अस्मदभिमुखतया आगतः सन्, श्रवांसि अन्नानि यशांसि, संमिमीहि सम्यक् निष्पादय। ( ऋ० सं० १।८।१८ )।

पत्नीसंयाजा [illegible] अर्थकर्मत्वात्।

ततो होतुर्हस्तेऽध्वर्युः इडात एव स्रुवेण आज्यं चतुर्वारमव-द्येत्। पञ्चमं च होता स्वयमेव गृहीत्वा, अप्रमाग्निनाभिरमुष्टिका-नाभिरङ्गुलिभिरिडां मुखमात्रे देशे धारयित्वा, सर्वैरृत्विग्भिः यजमानेन च अन्वारब्धः इडामुपह्वयेत्। तत्र—

"उपहूतोऽयं यजमानः" इत्यादस्य स्थाने "उपहूतेयं पत्न्युत्तरस्यां देवयज्यायामुपहूता भूयसि हविष्करण उपहूता देवा मदद हविर्जुषन्तामिति तस्मिन्नुपहूता" इति पठेत्।

अस्मिन्नेवावसरे 'मयीदम्' इति मन्त्रं सस्वरं यजमानो जपेत्।

ततस्सर्वे प्रणीतोत्करयोरन्तरेण निष्क्रम्य, इडां भक्षयित्वा, पुनस्तथैवागत्य, वेदेः पश्चिमभागे उपविश्य, ब्रह्मादिक्रमेण दर्भै-रुदकमादाय, "ॐ सुमित्रिया न आप ओषधयः सन्तु" इति मार्जयेरन्। ततस्सर्वे यथास्थानमुपविशेयुः।

अध्वर्युः गार्हपत्यस्य उत्तरत उपविश्य स्रुक्स्रुवं प्रगृह्य—

"ॐ अग्नेऽदब्धायोऽशीतम पाहिमा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या अविषं नः पितुं कृणु। सुषदा योनौ स्वाहा स्वाट्" ( य० सं० २।२० ) इति मन्त्रेण।

'ॐ इदमग्नयेऽदब्धायवेऽशीततमाय न मम' इति यज-मानेन त्यागे कृते, स्रुक्स्रुवाभ्यां संस्रवान् गार्हपत्ये जुहुयात्[1]।

ततो गार्हपत्यदक्षिणाग्न्योरन्तरतो बहिर्निष्क्रम्य, अप्रदक्षिणं गार्हपत्यं परीत्य, दक्षिणाग्नेरुत्तरत उपविश्य, स्रुवेण सकृज्जुह्वामा-ज्यं गृहीत्वा, वेदोपयमनपूर्वकम् "ॐ अग्नये संवेशपतये स्वा-हा" ( य० सं० २।२० ) इति मन्त्रेण।

१. संस्रवहोमस्य पत्नीसंयाजशेषत्वात् यावदुक्तं पत्नीसंयाजनिवृत्तौ अस्यापि निवृत्तिः। पशौ पत्नीसंयाजानां आवर्तनीकरणकत्वात्तत्र संस्रवरूपप्रतिपाद्यद्रव्या-भावात्तस्य प्रवृत्तिः। प्रतिपत्तिकर्मत्वात्।



"ॐ इदमग्नये संवेशपतये न मम" इति यजमानकर्तृ-कत्यागान्ते दक्षिणाग्नौ जुहुयात्। पुनस्तथैवाज्यं गृहीत्वा "ॐ सरस्वत्यै यशोभगिन्यै स्वाहा"–( य० सं० २।२० ) इति मन्त्रेण।

'ॐ इदं सरस्वत्यै यशोभगिन्यै न मम' इति त्यागान्ते तत्रैव जुहुयात्[1]।

ततः पिष्टलेपान् जुह्वां गृहीत्वा स्फ्योपयमनपूर्वकम्—

"ॐ उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले। अवप्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा" ( का० श्रौ० ३।७।१६ ) इति मन्त्रेण तान्—

'ॐ इदमग्नये न मम' इति त्यागान्ते दक्षिणाग्नावेव जुहुयात्[2]।

ततः पत्नी "ॐ वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदो भवस्तेन मह्यं वेदो भूयाः" ( य० सं० २।२१ ) इति मन्त्रेण वेदं मुञ्चेत्। ततः योक्त्रम् "ॐ प्रमा मुञ्चामि वरुणस्य पाशाद्येन माऽबध्नात्सविता सुशेवः। ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधातु" ( का० श्रौ० ३।८।२ ) इति मन्त्रेण। सैव मुञ्चेत्।

ततो होता गार्हपत्यस्य उत्तरत आरभ्य वेदेः पूर्वान्तं यावत् वेदं स्तृणीयात्। तत आहवनीये समिधमाधाय प्रणी-तोत्करयोरन्तरेण बहिर्निष्क्रामेत्।

ततोऽध्वर्युः ध्रौवमाज्यं विलाप्य, जुह्वां गृहीत्वा, स्रुव-

१. अस्यार्थकर्मत्वाभावादुक्तान्तरपक्षेऽप्यप्रवृत्तिः।

२. पिष्टलेपानां हविःशेषत्वादस्य प्रतिपत्तिकर्मत्वात् इडान्तेऽपि प्रवृत्तिः। अस्मिन् इमे अग्रेऽपि प्रयाजप्रकृतौ विकृतौ नेति सिद्धान्तितं कर्काचार्यैः।

बर्हिषः सकाशात् सव्ये पाणौ कुशमुष्टिं गृहीत्वा, उपविश्यैव "ॐ देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पतऽइमं देव यज्ञꣳ स्वाहा वाते धाः" (य० मं० २।२१) इति मन्त्रेण समिष्टयजुःसंज्ञकं होमम्—

"ॐ इदं वाताय न मम" इति त्यागान्ते आहवनीये कुर्यात्[1] । ततः सर्वाणि बर्हींषि जुह्वामवधाय "ॐ सं बर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा" (य० मं० २।२२) इति मन्त्रेण ।

"इदं दिव्याय नभसे न मम" इति त्यागान्ते तत्रैव जुहुयात्[2] ।

ततः आग्नीध्रः इध्मसंनहनान्यादाय स्रुगोपहग्रपूर्वकम् "ॐ रुद्राय पशुपतये स्वाहा" इति मन्त्रेण "ॐ इदं रुद्राय पशुपतये न मम" इति त्यागान्ते तत्रैव जुहुयात् ।

ततः अध्वर्युः प्रणीताः वेदिमध्ये आसाद्य, आहवनीयं प्रदक्षिणीकृत्य, वेदिमध्ये उदङ्मुख उपविष्टः प्रणीताः अपः वेद्याम् "ॐ कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति । पोषाय" (य० मं० २।२३)—(निनयामि) इति मन्त्रेण निनयेत् । (अपः पातयेदित्यर्थः) । (एष दार्शपौर्णमासिकोऽवभृथः) । (प्रणीतानिनयनं प्रतिपत्तिश्चरितार्थत्वात् )

ततः अप्रदक्षिणं प्रत्यागच्छति । ततः फलीकरणानन्तरं स्थापितान् कणान् प्रथमकपाले निधाय उत्करस्योपरि सव्येन

1. अर्थकर्मत्वादस्य अन्त्यापरिशुद्धाद्दौ अवृत्तिः । अत्र इमे ग्रस्य देवताः स्मिति कर्कभाष्ये स्पष्टम् ।

2. बर्हिषो परिमार्थत्वात् बर्हिर्होमः प्रतिपत्तिः । तस्य अन्त्यापरिशुद्धे प्रतिभ्रंशमेव ।



एव कृष्णाजिनं सव्येन धारयन् कृष्णाजिनस्याधस्तात् उत्करे कपालेनैव "ॐ रक्षसां भागोऽसि" इति मन्त्रेण (य० मं० २।२३) प्रक्षिपेत् । (नात्रोदकस्पर्शः । चतुर्थीनिर्देशाभावेन रक्षसां देवतात्वाभावात्, जुहोतिपदेशाभावाच्च) ।

(चरिष्टौ पुरोडाशकपालाभावेऽपि कपालमात्रमुपादेयम् । कणोपासने करणत्वश्रवणात् इति बोध्यम्)

ततोऽध्वर्युः आहवनीयं प्रदक्षिणीकृत्य पूर्णपात्रमादाय दक्षिणत उपविष्ट उत्तराभिमुखः यजमानस्याञ्जलौ पूर्णपात्रं निनयेत् (तत्स्थं जलमञ्जलौ क्षिपेदित्यर्थः) । अञ्जलौ प्रक्षेपश्च तथा कार्यः यथा यजमानस्य "संवर्चसा" इतिमन्त्रपाठान्ते भवेत् ।

ततोऽध्वर्युणा निनीयमानं पूर्णपात्रं यजमानोऽञ्जलिना "ॐ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम्" (य० मं० २।२४)

इति मन्त्रेण [1]प्रतिगृह्य तूष्णीं मुखं विमृज्यात् (शोधयेदित्यर्थः) ।

ततो यजमान उत्थाय दक्षिणवेदिश्रोणेरारभ्य आहवनीयादर्वाक् 'दिवि विष्णुः' इत्यादिभिः प्रतिमन्त्रं विष्णुक्रमान् प्राचः क्रमते । तत्र पूर्वं दक्षिणपादेन—

"ॐ दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" (य० मं० २।२५) इति मन्त्रेण दक्षिणे वेद्यन्ते प्राच्यां क्रामेत्, सव्यं पादं ततोऽर्वाक् एव स्थापयेत् । ततः "ॐ अन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो

1. पूर्णपात्रजलग्रहणस्य यजमानकर्तृकस्य प्राधान्यात् द्वादशाहे पर्वणि संस्मारणम् । अस्य प्रधानस्य अन्यापरिशुद्धे निवृत्तिः ।

योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" ( य० सं० २।२५ ) इति मन्त्रेण । ततः प्राच्यां दक्षिणपादेनैव द्वितीयं क्रामेत् ।

ततः "ॐ पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" (य० सं० २।२५) इति मन्त्रेण ततोऽपि प्राच्यां तृतीयं तथैव क्रामेत् । क्रामता आहवनीयस्यातिक्रमणं न कर्तव्यम् ।

( विष्णुक्रमणं च पदार्थः । अतोऽन्तरापच्छिन्ने निवृत्तिः )

ततः "ॐ अस्मादन्नान्निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" ( य० सं० २।२५ ) इति मन्त्रेण यजमानः स्वं भागमवेक्षेत[1] । ततः "ॐ अस्य प्रतिष्ठायास्ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" ( य० सं० २।२५ ) इति मन्त्रेण भूमिमवेक्षेत । ततः "ॐ अगन्म स्वः" ( य० सं० २।२५ ) इति मन्त्रेण प्राचीं दिशमवेक्षेत[2] । ततः "ॐ सं ज्योतिषाऽभूम" ( य० सं० २।२५ ) इति मन्त्रेण आहवनीयमीक्षेत । ततः "ॐ स्वयम्भूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि" (य० सं० २।२६) इति मन्त्रेण सूर्यमीक्षेत । ततः "ॐ सूर्यस्यावृतमन्वावर्ते"

1. भागसंस्कारत्वाभावात् लुप्तेऽपि भागेऽवेक्षणस्य प्रवृत्तिः । "अस्मादन्नात्" इति भागेक्षणमन्त्रे निर्भक्त इत्यादि "अस्यै प्रतिष्ठायाः" इति भूम्यवेक्षणमन्त्रे च ततो निर्भक्त इत्यादि अनुषज्यते ।

"कस्त्वा विमुञ्चति" इत्यादि प्रणीताविमोकमन्त्रे तु 'विनयति' इति लौकिकमध्याह्रियते । यत्रानुषङ्गस्तत्राव्यवधानेन संयोगः । यत्र तु अध्याहारस्तत्र व्यवधानेन । किं च अनुषङ्गविनाशे प्रैषं न दर्शितम् । अध्याहारविनाशे तु [illegible]र्तम् । इदं च "उत्तरयोरन्नाधायं स्यां स्वं सन्ततिः" (का० श्रौ० १।४।२) इति सूत्रे कर्कभाष्ये स्पष्टम् ।

२. प्राचीक्षणमर्थकर्म । अतोऽन्तरापत्तिच्छेदे निवृत्तिः । एवमाहवनीयेक्षणं सूर्येक्षणं च अर्थकर्मैव । अतस्तयोरपि अन्तलोपे निवृत्तिः ।



( य० सं० २।२६ ) इति मन्त्रेण प्रदक्षिणमा[illegible]येत्)।
( नात्रेतरथाऽऽवृत्तिः । सूत्रे प्रदक्षिणग्रहणात् ) ।

ततः "ॐ अग्ने गृहपते सुगृहपतिस्त्व[illegible]हं गृहपतिना भूयासं सुगृहपतिस्त्वं मयाऽग्ने [illegible]पतिना भूयाः । अस्थूरि णौ गार्हपत्यानि सन्तु शतं हिमाः" (य० सं० २।२७) इति मन्त्रेण गार्हपत्यमुपतिष्ठेत । (इदमप्यर्थकर्म)।

ततः "ॐ सूर्यस्यावृतमन्वावर्ते" ( य० सं० २।२७ ) इति मन्त्रेण प्रदक्षिणमावर्तेत ।

ततः "ॐ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा" ( य० सं० ५।३८ ) इति मन्त्रेण गार्हपत्यात् प्राच्यां गच्छेत् ।

ततो वेदिमध्ये उपविष्टः यजमानः "ॐ तन्तोऽसि तन्तुरस्यनुमा तनुह्यस्मिन्यज्ञे स्याꣳ सायुकृत्यायामस्मिन्तन्त्रेऽस्मिल्लोक इदं मे कर्मेदं वीर्यं ( पुत्रनाम गृहीत्वा ) अमुकशर्मा पुत्रोऽनुसंतनोतु" ( का० श्रौ० ३।८।२२ ) इति आशिषः प्रार्थयेत् । पुत्राभावे आत्मनाम निर्दिश्यैव आशिषः प्रार्थयेत अमुकशर्मन्येतम् ।

( 'अमुकशर्माऽहमनुसंतनवानि' इत्येवं प्रार्थनमिति हरिस्वामिनः ) ।

तत उत्थाय तूष्णीमाहवनीयमुपस्थाय "ॐ अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि" इति मन्त्रेण व्रतं विसृजेत् । तदनन्तरं पूर्वेणाहवनीयं गत्वा, दक्षिणावेदेरन्तरेण गत्वा, गार्हपत्यदक्षिणाग्नयोरन्तरालेन निष्क्रामेत् । ततः "ॐ सं यज्ञपतिराशिषा" इति मन्त्रेण स्वं भागं प्राश्नीयात् । ( व्रतविसर्ग-भागप्राशनयोरन्तरापच्छिन्नेऽपि प्रवृत्तिः प्रतिपत्तिरूपत्वात्)।

प्रोषिते यजमाने "ॐ अहं त्वदस्मि मदसि त्वमेतन्मम

त्वं योनिस्तव योनिरस्मि। ममैव सन्दिवि देवेष्ववि
पुत्रः प्रिये लोककृज्जातवेदः स्वाहा" (का० श्रौ० ३।६।११)
इदं जातवेदसे न मम इति मन्त्रेण अध्वर्युः यजमानभागं हस्तेन
आहवनीये जुहुयात्।

ततोऽध्वर्युणा स्वयं हस्ते गृहीत्वा "ब्राह्मणं तर्पयितवै"
इत्युक्ते यजमानः 'अस्याः पौर्णमासेष्टेः ( दर्शेष्टेः ) समृद्ध्यर्थं
न्यूनातिरिक्तदोषपरिहारार्थमेकं ब्राह्मणं भोजयिष्ये। तेन श्रीयज्ञपुरुषः प्रीयतां न
मम' इति संकल्पयेत्।

ततो ब्रह्मा "ॐ नमः कृताय कर्मणे अकृताय कर्मणे
नमः। अषाड् यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य
सन्वन् सनिं सुविमुचाविमुच धेह्यस्मभ्यं द्रविणं
जातवेदः स्वाहा" ( का० श्रौ० २।२।२१ ) इति मन्त्रेण
आहवनीये कुमापवर्गमिध्ममादधाति।

( समिदाधानं पदार्थः। अतः यावदुक्तादिषु निवर्तते )।

ततो यजमानः 'यथाशक्ति ब्राह्मणान् भोजयिष्ये तेन
श्रीयज्ञपुरुषः प्रीयतां न मम' इति ब्रूयात्।

ॐ सहैष यज्ञ उवाच नग्नताया वै बिभेमीति का
ते नग्नतेति अभित एव मा परिस्तृणीयुरिति तस्मादेतद-
ग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का ते
तृप्तिरिति ब्राह्मणस्य वै तृप्तिमनुतृप्येयमिति।

तस्मात्संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञ-
मेवैतत्तर्पयति। यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम्।
अग्निष्टत् स्विष्टकृद्विद्वान् स्विष्टं सुहुतं करोतु स्वाहा।

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः॥



प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादितिश्रुतिः॥
नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये।
नम आहवनीयाय महावेद्यै नमो नमः॥
नमः सभ्यावसथ्याभ्यां नमस्ते यज्ञमूर्तये।
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां यातु सद्यो वन्दे तमच्युतम्॥
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात्।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पये तत्॥

इति च पठित्वा, अनेन यथाज्ञानकृतेन पौर्णमासेष्ट्या-
ख्येन ( दर्शेष्ट्याख्येन ) कर्मणा श्रीभगवान् यज्ञपुरुषः प्रीयतां
न मम, ॐ तत्सत् नारायणार्पणमस्तु इति वदेत्।

इति कर्कानुसारिदर्शपूर्णमासप्रयोगः

## अथ सोमयाजिनो नियमेन सान्नाय्यवती दर्शेष्टिः

तत्र चतुर्दश्यां सायं पयसाऽग्निहोत्रहोमं कृत्वा, शेषभूतं
पयः दध्यादिना संयोज्य, उत्तरेद्युः आतञ्चनार्थं स्थापयेत्।
"उद्वास्यातनक्ति प्राग्घुतशेषेण" ( का० श्रौ० ४।२।३३ ) इति
सूत्रस्वरसात्[1]।

---

१. कर्कोपाध्यायो हि "उद्वास्यातनक्ति प्राग्घुतशेषेण" इति सूत्रं "प्रातर्हुतशेषेणेति संप्रदायः। नेत्यपरे। तदा प्रातर्हुतशेषेणेत्येवावक्ष्यत्। अतः प्राक्शब्दस्य पूर्वकालवाचित्वात्पूर्वं यद्धुतशेषं सायंहोमशेषमित्यर्थः" इति व्याख्याय सायंहोमशेषग्रहणस्य स्पष्टीकरणाय पुनराह "आतनक्तीति आतञ्चनम्। स च संकोचनार्थः। संकोचः काठिन्यं, तत् सायंहोमशेषेण सुकरमिति"। सायंहोमशेषभूतं हि पयः दध्यादियुक्तं सत् अहोरात्रात्मकेन कालेन कठिनीभावमापन्नम् अन्यस्य पयसः शीघ्रं कठिनीकरणाय प्रभवति। न तु प्रातर्हुतशेषभूतं पयः दध्यादियुक्तं सत् यामचतुष्टयमात्रेण सम्यक् कठिनीभावमापद्यते। येन तत् अन्यस्य शीघ्रं कठिनीकरणे समर्थं भवेत्। अतः सायंहोमशेषस्यैव ग्रहणमिति कर्काशयः। चतुर्दश्यां दध्नाऽग्निहोत्रहोमस्तु न कर्कसंमतः। नहि प्रातर्हुतशेषद्रव्यपेक्षया

किं च तत्र इष्टिपूर्वदिवसे मात्रान्वयदर्शेष्ट्या श्वो यक्ष्ये इति यजमानस्य संकल्पः । आहवनीयदक्षिणाग्न्योर्विहरणानन्तरं यजमानः षट् समिधो गृहीत्वा, स्फ्यं सव्यहस्ते धृत्वा, अग्निमष्टाकपालेन पुरोडाशेन, अग्नीषोमावन्तराऽऽज्येन उपांशु, इन्द्रं सान्नाय्येन ( दध्ना पयसा च ) श्वोऽहं यक्ष्ये इति संकल्प्य 'पञ्चदशो वज्र' इत्यादि व्रतोपायनीयाशनान्तं कुर्यात् । अनन्तरमध्वर्युः प्राचीमुदीचीं प्रागुदीचीं वा पलाशशाखां शमीशाखां वा अशुष्काग्राम् "ॐ इषे त्वा" (य० सं० १।१) ( छिनद्मि ) इति मन्त्रेण छिनत्ति । "ॐ ऊर्जे त्वा" (य० सं० १।१) ( संनमयामि ) इति मन्त्रेण अनुमार्ष्टि । ( अनुमार्जनं च शाखास्थपर्णादिपातनम् ) अनन्तरमस्मिन्नेवावसरे यजमानः "अग्ने व्रतपते" इति व्रतमुपेयात् कालान्तरे वा ।

ततः अध्वर्युः शाखामादाय यजमानस्य षड्भिर्गोभिः सह षड्वत्सान् संसृज्य, तान् वत्सान् प्रत्येकं "वायव स्थ" ( य० सं० १।१ ) इति मन्त्रेण तया शाखया उपस्पृश्य गोभ्यो वियोजयेत् ।

ततो मातॄणां गवां मध्ये एकां गाम्—

"ॐ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय (महेन्द्राय) भागं प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माऽघशꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः" (य० सं० १।१) इति मन्त्रेण शाखयोपस्पृशति । ततः अग्रे शाखार्थं प्रादेशमात्रं परित्यज्य शाखाया मूलदेशात्—

"ॐ वेदोऽस्युपवेषो द्विषतो ग्रीवा उपवेविड्ढि स्वे-

[illegible]ष्यं हुतशेषदध्नः कठिनीकरणाय विनियोगो भवितुमर्हति । [illegible] [illegible] सम्बन्धेनेति दिक् ।



गाँ २॥ अग्ने सुभग धारयेह । श्रद्धाः कर्मणः [illegible] ग्निनो यथाऽसन्" ( का० श्रौ० ४।२।१२ ) इति [illegible] छित्त्वा उपवेषं करोति । ततः "ॐ वसोः पवित्रमसि [illegible] सं० १।२ ) इति मन्त्रेण शाखायां कुशद्वयरूपं पवित्रं बध्नाति । ततः "ॐ यजमानस्य पशून् पाहि" ( य० सं० १।१ ) इति मन्त्रेण अग्न्यगारस्य पुरस्तात् शाखामुपगूहति ।

ततः सायं यजमानस्य यवाग्वा स्वयम् अग्निहोत्रहोमः ।

ततः अध्वर्युः त्रैवर्णिकं दोग्धारम् "उपसृष्टां प्रब्रूतात्" इति प्रेषयति ।

ततो वत्सं संसृज्य, 'उपसृष्टा' इति दोग्ध्रा प्रोक्ते, अध्वर्युः "ॐ द्यौरसि पृथिव्यसि" ( य० सं० १।२ ) इति मन्त्रेण उखाम् ( स्थालीम् ) आददाति ।

ततः "ॐ मातरिश्वनो घर्मोऽसि विश्वधा असि । परमेण धाम्ना दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत्—" ( य० सं० १।२ ) इति मन्त्रेण गार्हपत्ये स्थालीमधिश्रयति । ततः "ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्" ( य० सं० १।३ ) इति मन्त्रेण शाखापवित्रं स्थाल्यामुदगग्रं प्रागग्रं वा स्थापयति । ततो दोग्धारं 'गां धुक्ष्व' इति प्रेष्य वाग्यतोऽध्वर्युरवतिष्ठते । ततः स्थालीमन्वारब्धे यजमाने, दोग्धा काष्ठमयादिपात्रे गां दुग्ध्वा, स्थाल्यामासिच्यमाने पयसि अध्वर्युः "ॐ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा" ( य० सं० १।३ ) इति मन्त्रं जपति । ततः "ॐ कामधुक्षः" ( य० सं० १।३ ) इति

१. अत्र मुद्रितसभाष्यश्रौतसूत्रपुस्तकेषु प्रमादात् '-' 'देवोऽपि-' इत्यादिमन्त्रः संपूर्णो न धृतः । लिखितसूत्रपुस्तकपर्यालोचनेन तु अस्माभिः कात्यायनश्रौतसूत्रग्रन्थेनोल्लिखितः इति बोध्यम् ।

च्छति दोग्धारम्। 'गङ्गाम्' इति दोग्ध्रा प्रोक्ते "ॐ सा विश्वायुः" ( य० सं० १।४ ) इति अध्वर्युः प्राह।

पुनरध्वर्युः 'गां धुक्ष्व' इति प्रेष्यति। ततो दोग्धा द्वितीयां दुग्ध्वा, यजमानेनान्वारब्धायां स्थाल्यां पवित्रस्योपरि दुग्ध- सिञ्चति। तदाऽध्वर्युः "देवस्त्वा" इति जपति।

ततः" "कामधुक्षः" इति पृच्छति। ततः 'यमुनाम्' इति ग्ध्रा प्रोक्ते "ॐ सा विश्वकर्मा" ( य० सं० १।४ ) इति ध्वर्युराह।

पुनः 'गां धुक्ष्व' इति प्रैषः। तृतीयां गां दुग्ध्वा पूर्ववत् ः स्थाल्यामासिञ्चति दोग्धा। "देवस्त्वा" इति अध्वर्यु- पति। ततः "कामधुक्षः" इति पृच्छति। 'सरस्वतीम्' इति ग्धा प्रत्याह। तदा "ॐ सा विश्वधायाः" ( य० सं० ४ ) इति अध्वर्युराह। अनन्तरं तिसृणां गवां दोहनं नित्यम्। धिकानां पाक्षिकम्। अन्यासां तिसृणामधिकानां वा दोहने अध्वर्योर्वाग्यमः, यजमानस्य स्थाल्यन्वारम्भश्च न भवतः।

सर्वदोहान्ते दोहनपात्रे किञ्चिज्जलं प्रक्षिप्य, पात्रं प्रक्षाल्य, लं स्थाल्यां दुग्धमध्ये—"ॐ संपृच्यध्वमृतावरीरूर्मि- मधुमत्तमाः। पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सा- ?" (का० श्रौ० ४।२।३२) इति मन्त्रेण अध्वर्युरासिञ्चति। ततः श्रपयित्वा, उद्वास्य, चतुर्दश्यां सायंदुग्धशेषेण दधिभाव- पादितेन "ॐ इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि" ( य० सं० १।४ ) इति मन्त्रेण आतनक्ति। ( कठिनीभव- र्थं तत्र प्रक्षिपतीत्यर्थः )। ततः सोदकेन अनुन्मयेन पात्रेण नेन अपिदधाति "ॐ विष्णो हव्यꣳ रक्ष" ( य० सं०

1. "तद्वैके महेन्द्रायेति कुर्वन्ति" इति श्रुतेः पक्षे महेन्द्रस्य भागार्थं— "महेन्द्रस्य त्वा भागꣳ सोमेनातनच्मि" इति पाठ्यम्।



१।४ )। इति मन्त्रेण। ततस्तूष्णीं शिक्यादौ तां स्थालीं निदधाति। ततः शाखया पूर्ववत् वत्सापाकरणं प्रातर्दोहार्थम्। अग्न्यगारस्य पुरस्ताच्छाखोपगूहनम्। यजमानस्य अग्न्यगारे शयनम्।

प्रातर्यजमानः स्वयमेव यवाग्वा अग्निहोत्रं हुत्वा, सूर्ये अनुदिते एव व्रतचरणं कुर्यात्। तत्र विशेषः—अमुकशर्मन् सान्नाय्य- वत्या दर्शेष्ट्याऽहं यक्ष्ये इति। पात्रासादने विशेषः—अष्टावेव कपालानि। पवित्रासादनानन्तरं शाखोपवेषः वेदानन्तरं ( कुशमुष्ट्यनन्तरं ) दोहनचतुष्टयम्। तत्र बन्धनरज्जुः, दो- हनपात्रं, शाखापवित्रम्, उखा चेति। आज्यानन्तरं पुरोडाश- पात्री एका।

देवस्य त्वेत्यनेन आग्नेयस्यैव हविषो निर्वापः।

आज्यनिर्वापवेदसंस्कारानन्तरम् 'उपसृष्टां प्रब्रूतात्' इत्यादिः पयसि प्रक्षालनजलप्रक्षेपान्तो दोहः। प्रातर्दोहश्च सायंदोहपादन्य- पात्रे कर्तव्यः। सायंदोहमाहृत्य तस्य गार्हपत्यस्य पश्चिमतः स्थाप- नम्। आग्नेयपुरोडाशस्यैकत्वाद्विभागाभावेन तत्पूर्वकः "इद- मग्नेः" इत्यालम्भोऽपि न प्रवर्तते। पुरोडाशाधिश्रयणानन्तरं तदुत्तरतः पयोऽधिश्रयणम्। पर्यग्निकरणस्य आज्यपुरोडाश संयोगेन विधानात् पयसः पर्यग्निकरणाभावः। पुरोडाशं प्रातर्दोहं च श्रपयित्वा, पुरोडाशाभिभस्मीकरणान्ते पात्रीं स्थापयित्वा, तस्यामुपस्तीर्य, अभिष्ठं पुरोडाशं पयश्च अभिघार्य, गार्हपत्यस्यो- त्तरतो निहितायां पात्र्यां पुरोडाशमुद्वास्य, तदुत्तरतो दधि निधाय तदुत्तरतः पय उद्वासयेत्। ततः आग्नेयपुरोडाश-दधि-पयसां प्राणदानम्। प्राणदानमन्त्रे च दध्नि पयसि च "इन्द्रं ( महेन्द्र- पक्षे महेन्द्रं ) गच्छ" इति विशेषः।



ततः कपालान्यङ्गारेभ्योद्वास्य आज्यस्थाली-पुरोडाश-

दधि-पयसां "प्रियेण धाम्ना" इति मन्त्रेण क्रमेणासादनम्। "ध्रुवा असदन" इति मन्त्रेण आज्यस्थाल्यादीनामालम्भनम्। तत आत्मालम्भे उदकस्पर्शः।

होता आवाहने "अग्नीषोमौ" इत्युपांशु उक्त्वा "आ३व-ह इन्द्रमा३वह" इत्यादि ब्रूयात्। उत्तमे प्रयाजे स्वाहाऽ-ग्निᳬ स्वाहा" इत्यनन्तरम् "अग्नीषोमौ" इत्युपांशु उक्त्वा उच्चैः "स्वाहेन्द्रᳬ स्वाहा" इत्यादि ब्रूयात्।

उत्तमप्रयाजे त्यागश्च "ॐ इदमग्नये सोमायाग्नयेऽग्नीषोमा-भ्यामिन्द्राय देवेभ्य आज्यपेभ्यो न मम' इति यजमानेन कार्यः।

आग्नेययागानन्तरमग्नीषोमीय उपांशुयागः।

ततोऽध्वर्युः 'इन्द्रायानुब्रूहि' इति होतारं प्रेषयेत्।

ततो होता[1] "ॐ एन्द्र सानसिᳫ रयिᳫ सजित्वानᳫ सदासहम्। वर्षिष्ठमूतये भरो३म्" (का० हौ० प० २१९) इत्यनुवाक्यां पठेत्।

ततोऽध्वर्युः जुह्वामुपस्तीर्य, प्रथमं पयसो मध्यात्पूर्वार्धाच्च द्विरवदाय, ततो दध्नस्तथैव द्विरवदाय, उपरि सकृदभिघार्य, दधिपयसोः प्रत्यभिघारणं कृत्वा, अतिक्रम्याश्राव्य, 'इन्द्रं यज' इति होतारं प्रेषयेत्।

होत्रा च "ॐ ये यजामहइन्द्रं[2] प्रसस्साहिषे पुरुहूत

1. ऋ० मं० १। ८। १५। अस्या अर्थः—हे इन्द्र, ऊतये अस्मद्रक्षार्थं, सानसिं सम्भजनीयं, सजित्वानं समानशत्रुजयशीलं, सदासहं सर्वदा शत्रूणामभि-भवहेतुं, वर्षिष्ठम् अतिशयेन वृद्धं, प्रभूतं रयिं धनम्, आभर आहरेति। एन्द्रेत्यात्र नरेऽगमय संबन्धः। महेन्द्रपक्षे "महाँ २॥ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ २॥ इव। स्तोमैर्वत्सस्य वावृधो३म्" (य० मं० ७। ४०) इत्यनुवाक्यां पठेत्।

2. ऋक्सं० ८। ८। ३८। अस्या अर्थः—हे पुरुहूत बहुभिराहूतेन्द्र, शत्रून् वैरिणः, प्रसस्साहिषे प्रकर्षेण अभिभवसि। ते तव, शुष्मः शोषकं बलं, ज्येष्ठः प्रशस्यतमं वृद्धतमं वा भवति। इह अस्मिन् कर्मणि, रातिस्तव दानम् अस्तु



शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनां३ वौ३ षट्" इति याज्यायां पठितायाम् अध्वर्युर्जुहुयात्तन्त्रेण।

ॐ इदमिन्द्राय न ममेति यजमानस्त्यागं कुर्यात्।

होता स्विष्टकृन्निगदे "अग्नेः प्रिया धामान्ययाट्" इत्य-नन्तरम् "अग्नीषोमयोः" इत्युपांशूक्त्वा उच्चैः "प्रिया धामा-न्ययाडिन्द्रस्य प्रिया धामानि" इत्यादि ब्रूयात्।

( प्राशित्रमिडा च दधिपयसोः प्रवर्तेते। द्रव्यसंस्कारत्वात्। षड्वत्तादिभागाश्चतुर्धाकरणं च पुरोडाशसंयोगेन श्रवणात् न दधिपयसोर्भवन्ति। )

शाखापवित्रेण सहास्य ऐष्टिकपवित्राभ्यां मार्जनम्। ततः शाखापवित्रं शाखायामेव स्थापनीयं, न तु प्रस्तरे। मार्जनमात्रे एव श्रवणात्। सूक्तवाके "अग्नेरग्नीषोमयोरिन्द्रस्योज्जितिम-नूज्जेष्यत्वयं यजमान" इति "अग्निरग्नीषोमाविन्द्रस्तमपनु-दन्तु यस्मयं यजमान" इति च अध्वर्युर्ब्रूयात्।

सूक्तवाके होता "अग्निरिदᳫ हविरजुषतावीवृधत महो ज्यायोऽकृत" इत्यनन्तरम् "अग्नीषोमौ" इत्युपांशूक्त्वा, "इदᳫ हविरजुषेताम्" इत्यादि पौर्णमासवदुक्त्वा, उच्चैः "इन्द्र इदᳫ हविरजुषत" इत्यादि पठेत्।

सह शाखया प्रस्तरानुप्रहरणमाहवनीये। अध्वर्युणा परिधिषु हूयमानेषु अग्नीत् "ॐ जुहोमि त्वा सुभग सौभगाय पुरुपतमं पुरुहूत श्रवस्यन्तस्वाहा" (का० श्रौ० ४।२।४३) इति मन्त्रेण उपविश्योपवेषं जुहुयात्।

"ॐ इदᳫ सौभगाय न मम" इति यजमानस्त्यागं कुर्यात्।

इति सान्नाय्यवद्दर्शेष्टिप्रयोगः।

अस्मभ्यं भवतु। तदर्थं हे इन्द्र दक्षिणेना = दक्षिणेन हस्तेन, वसूनि धनानि, आभर = आहर आनय। त्वं रेवतीनां रयिमतीनां बहुधनानां, सिन्धूनां स्यन्द-नशीलानां, नदीनां पतिरसि स्वामी भवसि। महेन्द्रपक्षे "महां २॥ इन्द्रो नृवदाचर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्" इति याज्या बोध्या। ( य० मं० ७। ३९ )।

अथ सव्ययनोऽसव्ययनश्च अमायाम् अपराह्णे–

## पिण्डपितृयज्ञः

तत्र देशकालकीर्तनान्ते कृतसङ्कल्पो यजमानः नीवीं कृत्वा दक्षिणाऽभिमुखः परमेश्वरप्रीतये पिण्डपितृयज्ञेनाऽहं यक्ष्ये इति संकल्पयेत्। ततोऽग्निमपरेण उत्तरेण वा पात्रासादनम्। अग्रेण रेखाकरणम्। "एतत्ते" इति पिण्डदानम्। सूत्रान्तरादानं न। एतान्यत्र कल्पिकपदार्थानहं करिष्ये इति वैकल्पिकपदार्थानुवादः। ततोऽध्वर्युः अग्निं कव्यवाहनं सोमं पितृमन्तं यमं वा, अमुकगोत्रम्, अमुकशर्माणं यजमानपितरम् अमुकशर्माणं यजमानपितामहम् अमुकशर्माणम् यजमानप्रपितामहं चरुणा पिण्डैर्यक्ष्ये (यक्ष्ये) इत्युल्लिखेत्। (यजमानस्य स्वयं कर्तृत्वे तु अमुकगोत्रम् अस्मत्पितामहम् अस्मत्प्रपितामहम् इति प्रयोगः। सति संभवे अध्वर्युकर्तृकत्वमेव "यजमानस्य पितृप्रभृतित्रीन्" (का० श्रौ० ३।१।१०) इति सूत्रस्वरससिद्धम्)।

ततोऽध्वर्युर्यजमानो वा दक्षिणाग्निमाग्नेयकोणाद्दक्षिणसंस्थमपदक्षिणं दक्षिणाग्रदर्भैः परिस्तीर्य, पात्रासादनं कुर्यात्– दक्षिणाग्निमपरेण प्रागग्रं दक्षिणबिलं दक्षिणसंस्थं पात्रं स्रुचं वा, उलूखलं, मुसलं, शूर्पं, चरुपात्रम्, उदकम्, आज्यं, मेक्षणं, इध्मम्, उदपात्रं, सकृदाच्छिन्नानि, व्रीहीन्, सूत्राणि चेति।

ततो गार्हपत्यमपरेण दक्षिणाभिमुखः उपविश्य, स्रुचि स्थाल्यां वा अपूर्णं व्रीहीन् तूष्णीं गृहीत्वा, दक्षिणाग्निमुत्तरेणोलूखले दक्षिणाभिमुखस्तिष्ठन्नवहन्ति। शूर्पे कृत्वा निष्पूय, सकृत्फलीकृत्य, स्थाल्यामुदकमासिच्य, सारतण्डुलान्पितृतीर्थेनोप्य, दक्षिणाग्नावधिश्रित्योपकूलमभिघार्य, दक्षिणत उद्वास्यापदक्षिणमाहृत्य अध्वर्युर्मेक्षणेन "ॐ अग्नये कव्यवाहनाय स्वाहा" (य० सं० २।२९) इति जुहोति।

यजमानः—"ॐ इदमग्नये कव्यवाहनाय न मम" इति त्यागं कुर्यात्। पुनरध्वर्युः—तद्दक्षिणे "ॐ सोमाय पितृमते स्वाहा" (य० सं० २।२९) इति जुहोति।



यजमानः—"ॐ इदं सोमाय पितृमते न मम" इति त्यागं कुर्यात्। अध्वर्युः—मेक्षणं हुतस्य अग्नौ प्रास्यति।

ततः स्फ्येन दक्षिणाभिमुखः "ॐ अपहता असुरा रक्षाᳬसि वेदिषदः" (य० सं० २।२९) इति दक्षिणाग्रां रेखामुल्लिखति। अथ उपस्पृश्य, दक्षिणाग्नेरुल्मुकमादाय "ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात्"– (य० सं० २।३०) इति रेखाग्रे निदधाति। अथ उपस्पृश्य, उदपात्रमादाय, अमुकगोत्र यजमानस्य पितः अमुकशर्मन् अवनेनिक्ष्व इति पितृतीर्थेन रेखामूलेऽवनेजयति। रेखामध्ये अमुकगोत्र यजमानस्य पितामह अमुकशर्मन् अवनेनिक्ष्व इति। अथ रेखाग्रे अमुकगोत्र यजमानस्य प्रपितामह अमुकशर्मन् अवनेनिक्ष्व इति। सकृदाच्छिन्नानि रेखायां कृत्वा यथाऽवनिक्तं पिण्डान् ददाति त्रीन्। चरुं त्रेधा विभज्य, पिण्डान् कृत्वैकमादाय, अमुकगोत्र यजमानस्य पितः अमुकशर्मन् "एतत्तेऽन्नᳪस्वधा" इति दद्यात्।

यजमानः—ॐ इदम् अमुकगोत्रायाऽस्मत्पित्रे अमुकशर्मणे न मम। पुनरध्वर्युः द्वितीयमादाय अमुकगोत्र यजमानस्य पितामह अमुकशर्मन् "एतत्तेऽन्नᳪस्वधा" इति दद्यात्।

यजमानः—ॐ इदम् अमुकगोत्रायाऽस्मत्पितामहायामुकशर्मणे न मम। अध्वर्युः—तृतीयमादाय अमुकगोत्र यजमानस्य अमुकशर्मन् "एतत्तेऽन्नᳪस्वधा" इति दद्यात्।

यजमानः—ॐ इदम् अमुकगोत्रायाऽस्मत्प्रपितामहायामुकप्रपितामह शर्मणे न मम। इति त्यजति।

अध्वर्युः—हस्तं प्रक्षाल्य, "ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्" (य० सं० २।३१) इति जपति। अपसव्यमावृत्योदङ्ङास्ते आ तमनात्। (आतमनात् उच्छ्वासावसानं यावत्)। पुनस्तथैव आवृत्य, दक्षिणाभिमुखो भूत्वा,

"ॐ अमीमदन्त पितरो यथाभागमावृषायिषत" ( य० सं० २।३१ ) इति जपति । पिण्डमूले चोपरि पूर्ववदवनेजनम् । नीवीं विस्रंस्य षडञ्जलीन् करोति प्रतिमन्त्रम्—"ॐ नमो वः पितरो रसाय"१ "ॐ नमो वः पितरः शोषाय"२ "ॐ नमो वः पितरो जीवाय"३ "ॐ नमो वः पितरः स्वधायै"४ "ॐ नमो वः पितरो घोराय"५ "ॐ नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वः"६ ( य० सं० २। ३२ ) इति । "ॐ गृहान्नः पितरो दत्त सतो वः पितरो देष्म" ( य० सं० २।३२ ) इति जपति च । ततः "ॐ एतद्वः पितरो वासः" ( य० सं० २।३२ ) इति त्रीणि त्रीणि सूत्राणि प्रतिपिण्डं ददाति । उदपात्रजलशेषम् "ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन्" ( य० सं० २।३४ ) इति पिण्डेषु निषिञ्चति । पिण्डानुद्धृत्य यजमानाय प्रयच्छति । स चावजिघ्रति । अध्वर्युः सकृदाच्छिन्नान्यग्नौ प्रहृत्योल्मुकं च, सव्येनापः स्पृशेत् । पत्नी पुत्रकामा चेत् तस्यै यजमानः अनवघ्रातं मध्यमपिण्डं प्रयच्छेत् । सा च करिष्यमाणपार्वणमध्यमपिण्डेन सह "ॐ आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत्" ( य० सं० २।३३ ). इति मन्त्रेण प्राश्नाति । ततो दर्शश्राद्धम् । जीवत्पितृकस्य पिण्डपितृयज्ञाभावः । इति पिण्डपितृयज्ञप्रयोगः ।

नाहं श्रौतार्थे ख्यातः श्रीगौरीनाथसंश्रयात् ।
तथापि व्यलिखं किञ्चित् प्रीयतां तेन मद्गुरुः ॥
चन्द्रनागाङ्कभूवर्षे भाद्रमासासिते दले ।
कृष्णाष्टम्यां गतः पूर्तिं कातीयेष्टिप्रदीपकः ॥

इति श्रीनित्यानन्दपर्वतीयविरचितः कातीयेष्टिदीपकः समाप्तः ।
संवत् १९८१ भाद्र , शुक्रे । शुभम् ।

